अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [३६]



वाचनाचार्यश्रीसाधुसुन्दरगणिविरचितः

# श्रीशब्दरत्नाकरः ।

शब्दानामकाराद्यनुक्रमणिकासहितः

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादाम्भोजचञ्चरीकायमाणाभ्या

श्रावक-हरगोविन्ददास-बेचरदासाभ्यां संशोधितः ।

स च

रङ्गूननगरवास्तव्यश्रीजैनश्वेताम्बर-

सङ्घसाहाय्येन

वारणस्यां

श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण गङ्गाप्रसादगुप्तस्य आर्टप्रिन्टिंग वर्कसाख्ययन्त्रालयेमुद्रयित्वा प्रकाशित ।

वीरसंवत् २४३९ ।

मूल्य पादानरूप्यकम् ।

YASHOVIJAYA JAINA GRANTHAMALA [36]

THE

# SHABDARATNAKARA

OF

*VACHANACHARYA SHRI SADHU SUNDARA GANI*

EDITED BY

SHRAVAK PANDIT HARGOVINDDAS

AND

SHRAVAK PANDIT BECHARDAS,

Most devoted Servants of His Holiness Shastra Visharad Jainacharya Shri Vijaya Dharma Suri.

WITH

The pecuniary help of Shree Jain Shvetambar Sangha **OF RANGOON.**

*PUBLISHED BY SHAH HARSHCHAND BHURABHAI,*

AND

*Printed by Babu Gaurya Prasad Gupta, at his Art Printing Works, Benares City.*

Veer-Era, 2439.

*Price* 12 *annas.*

# प्रस्तावना ।

'शब्दरत्नाकर' इति स्वार्थ्यां सत्यापयतोऽस्य श्रीशब्दरत्नाकरकोशस्य निर्मातारः, शब्दशास्त्रनिष्णाताः, सर्वमपि शब्दभेदं संविदानाः, साधुसुन्दरा , 'वाचनाचार्य' इति पदमभूषिताः श्रीसाधुसुन्दरगणयः कीदृशाः, ?, कदा किं प्रतिष्ठापयामासुः ?, इति प्रश्नपरम्परापरायणान् त एवावबोधयन्ति निजनिर्मितधातुरत्नाकरप्रशस्तिप्रान्तभागेन– "व्योमसिद्धिरसक्षोणी(१६८०)मितेऽब्दे विवृतिः कृता क्रियाकल्पलतानाम्नी शुभे दीपालिकादिने" इति ते चानेन पूर्वार्धश्लोकेन स्वं धातुरत्नाकरविवृतिकर्तारं सप्तदशशताब्दीमध्यगत प्राचीकटन् । ततश्च स्पष्ट एवावसीयतेऽमीषां विदुषां सप्तदशशताब्द्यां सत्तासमय इति ।

ते च साधुकीर्तीनां साधुकीर्तिनामधेयानां पाठकप्रवराणां पण्डितरूपा अन्तेवासिनः, लघुभ्रातरश्च साधुकीर्तिविनेयावतंसानां श्रीविमलतिलकानामित्यपि तस्मादेव धातुरत्नाकरादवबुध्यते । निजवंशवृक्षप्रशंसोद्देशे ते एवोल्लिखन्ति धातुरत्नाकरे ।

आदौ—

"दुर्वादिमत्तद्विपकेसरिभ्यो विद्यावशावल्लभवल्लभेभ्यः ।
श्रीसाधुकीर्त्याह्वयपाठकेभ्यो नमामि मद्दीक्षकशिक्षकेभ्यः" ।इति ।

अन्ते तु—

"शास्त्राध्यापनसत्रसत्र नियतं यैर्मण्डितं भूतले
पायं पायमपायदोषविकलं विद्यारसं पूरुषाः ।
आघ्राता इव नापरत्र विदधुस्तत्प्रार्थनं वाग्मिनां
शृङ्गारोपमसाधुकीर्तिगणयः श्रीपाठका जज्ञिरे ॥
तच्छिष्योऽस्ति च साधुसुन्दर इति ख्यातोऽद्वितीयो भुवि
तेनैषा विवृतिः कृता मतिमतां प्रीतिप्रदा सादरम् ।
स्वोपज्ञोत्तमधातुपाठविलसत्सद्धातुरत्नाकर—
ग्रन्थस्यास्य विशिष्टशाब्दिकमतान्यालोक्य संक्षेपतः" ॥इति ।

तत्रैव च निजगुरुगुरुबन्धुत्वेन श्रीविमलतिलकं स्तुवन्ति ते—

"विमलतिलकनामा तद्विनेयेषु मुख्यः
स्वगुरुपरमभक्तश्चारुचारित्रयुक्तः ।
इह हि विजयतेऽसौ ज्ञातसिद्धान्तयुक्तिः ।
सततमधिकमस्पर्द्धक्तिभावं दधानः" ॥

इममेवार्थं तेषामुक्तिरत्नाकरग्रन्थोऽपि द्रढयति—

"खरतरमतपाथोराशिवृद्धौ मृगाङ्काः
यवनपतिसभायां ख्यापिताईन्मताज्ञाः ।
प्रहतकुमतदर्पाः पाठकाः साधुकीर्ति–
प्रवरसदभिधानाः सिंहतुल्या जयन्ति ॥
तेषां शास्त्रसहस्रसारविदुषां शिष्येण शिक्षाभृता
भक्तिस्थेन हि साधुसुन्दर इति प्रख्यातनाम्ना मया ।
ग्रन्थोऽयं विहितः कवीश्वरवचोबुद्धयोक्तिरत्नाकरः
स्याऽन्येषां हितहेतवे बुधजनैर्मान्याश्चिरं नन्दतु ॥,, इति ।

ते च कोरकान् ग्रन्थानग्रन्थिषत इत्यपि नावगतं संपूर्णमधुना, किन्तु तेषां ग्रन्थरत्नत्रयमुपलभ्यते साम्प्रतम्– एकस्त्वयं कोशः, उक्तिरत्नाकरः, स्वोपज्ञक्रियाकल्पलतारव्यटीकानिष्टङ्कितो धातुरत्नाकरश्चेति ।

तेषु एकेनैवानेन कोशसमीक्षणेन तेषां शब्दशास्त्रपारगतत्वमवगम्यते एव सहृदयानामिति । सत्स्वपि नैकेषु कोशेषु नायमेषामायास आयासः; यतस्तैरत्र शब्दार्थभेदसंग्रहं विधाय सर्वेभ्योऽपि कोशेभ्योऽयमत्यरेचि, तत्तु सुस्पष्टमेव शब्दविदामिति अयं च कोशः षट्काण्ड्या व्यभाजि तैः— तत्र क्रमेण, प्रथमोऽर्हत्काण्ड , देवकाण्डः, मानवकाण्ड , तिर्यक्काण्डः, नारककाण्डः सामान्यकाण्डश्चेति । कोशमिमं कृत्वा तैः परमकारुणिकैः कवयोऽत्यन्तमुपकृता इति । अस्य च शोधनानेहसि लिखितपुस्तकत्रयमुपालप्स्यहि सतस्तेषां पुस्तकदातृणा महोपकारं मन्वानौ तान् नामग्राहमुल्लिखाव ।

२ अस्मद्गुरूणां श्रीशास्त्रविशारदजैनाचार्याणां प्रतिद्वयं शुद्धं च, तयोरेकस्या प्रान्ते "संवत् १७४८ फाल्गुनकृष्ण १४ दिने श्रीबीकानेरमध्ये भट्टारकजैङ्गमयुगप्रधान श्रीश्रीश्री १०८ श्रीजिनचन्द्रसूरिसूरीश्वराणां शिष्येण पण्डितनेमिसुन्दरेणालेखि प्रतिरियम् ॥ श्रीरस्तु ॥ श्रीः" एवमुल्लेखोऽस्ति । अन्यस्या अन्ते तु—

"सप्ताब्धिगोत्रगोत्राप्रमिते संवति संवति ।
माघस्याद्याष्टमीपक्षे श्रीविक्रमपुरे पुरे ॥ श्री.
लिलिख एष सद्ग्रन्थो जयसुन्दरसाधुना ।
इयं प्रतिः स्थिरा भूयात् यावच्चन्द्रदिवाकरौ ॥"

एका तु श्रीयुतनेमचन्द्रयतिवर्याणाम्, तदन्ते तु "संवत् १७५६ फाल्गुनशुक्ल ९ दिने श्रीमिडतायां लिपीचक्रे अस्यान्ते चैकोऽकारादिशब्दानुक्रमोऽपि दत्त । प्रतिस्थलं च टिप्पणेन सुस्पष्टनमपि कृतम् । जागरूकमनसा शोधितेऽप्यस्मिन् ज्ञानावरणीयोद्भवाः स्खलनाः निरस्यन्त सज्जनाः पाठकाः हंसायिष्यन्ते–

इति प्रार्थयेते
हरगोविन्द–बेचरदासौ ।

॥ अर्हम् ॥

श्रीविजयधर्मसूरिगुरुभ्यो नमः ।

वाचनाचार्यश्रीसाधुसुन्दरगणिविरचितः

# श्रीशब्दरत्नाकरः ।

ध्यात्वाऽर्हतो गुरून् प्राज्ञान् वाग्देवीमपि भक्तितः ।
शब्दरत्नाकरं कुर्वे शब्दभेदार्थसंग्रहम् ॥ १ ॥
अर्हद्देवनृतिर्यञ्चो नैरयाः साङ्गकाः समाः ।
अव्ययाश्च क्रमोऽत्रायं लक्ष्यतां सुखलब्धये ॥ २ ॥
भवेज्जिनेऽर्हन्नर्हन्तः सार्वः सर्वीय इत्यपि ।
तीर्थङ्करस्तीर्थकरः परमेष्ठी ठकारयुक् ॥ ३ ॥
वृषभर्षभौ नाभेये, शंभवे संभवोऽपि च ।
एकादशजिने श्रेयान् श्रेयांसो, द्वादशार्हति ॥ ४ ॥
वसुपूज्य-वासुपूज्यावनन्तोऽनन्तजिद् मतः ।
विंशे जिने मुनिस्तद्वद् मुनिसुव्रत-सुव्रतौ ॥ ५ ॥
अरिष्टनेमौ नेमिश्च नेमी नन्तोऽपि कथ्यते ।
श्रीपार्श्वः पार्श्वनाथश्च वामेये, चरमेऽर्हति ॥ ६ ॥
महावीरः स वीरश्च, तुर्यार्हन्तस्य वत्सरि ।
दन्त्यादिः संवरः, कुन्थुबप्पे शूरश्च सूरयुक् ॥ ७ ॥
मरुदेवा मरुदेव्यप्याद्यार्हन्मातरि स्मृता ।
तालव्यमध्या त्रिशला, पञ्चमार्हदुपासके ॥ ८ ॥

---

१ सप्तदशजिनपितरि ।

ऋ्युकारस्तुम्बुरुश्चक्रेश्वर्यामप्रतिचक्रिका ।
अजिताऽजितबलायां, सुतारा तु सुतारका ॥ ९ ॥
निमीश्वरोऽर्हद्विशेषे ह्रीकारोऽथ कृतार्थके ।
तुर्यहल्, शूरदेवस्तु दन्त्यतालव्यसादिमः ॥ १० ॥
संवरो दन्त्यसादिः स्यात्, भद्रकृद् भद्र उच्यते ।
मोक्षे श्रेयः शिवं तालव्यादी, निःश्रेयसं पुनः ॥११॥
मध्यतालव्ययुक्, साधौ साधन्तः साधयन्तकः ।
रिप्यृषी यति-यतिनौ श्रमण-श्रवणौ तथा ॥ १२ ॥
मुनिस्ते तप-तपसी अदन्त-सान्तके स्मृते ।
प्रायश्चित्तं प्रायश्चित्तिः पापसंशोधके तपे ॥ १३ ॥
शिष्यः शिक्षु-शैक्षौ तालव्याद्याश्छात्रे च तद्विदि ।
व्रतादाने परिव्रज्या प्रव्रज्याऽप्यभिधीयते ॥ १४ ॥
क्षपणे नग्न-नग्नाटौ श्रमणः श्रवणोऽपि च ।
क्षेमे भद्रं भद्र-भन्द्रे प्रशस्तं शस्तमित्यपि ॥ १५ ॥
भावुकं भविकं भव्यं शिवं च श्वोवसीयसम् ।
श्रेयः स्वःश्रेयसं तालव्यादयः, कुशलं पुनः ॥ १६ ॥
मध्यतालव्यकं प्रोक्तं, सुभं तालव्य-दन्त्ययुक् ।
मङ्गल्यमपि माङ्गल्यं मङ्गलं च तथा स्मृतम् ॥ १७ ॥

इति वादीन्द्रश्रीसाधुकीर्त्युपाध्यायमिश्राणां शिष्यलेशेन वाचनाचार्यसाधुसुन्दरगणिना विरचितायां शब्दरत्नाकरनामशब्दप्रभेदनाममालायामर्हत्काण्डः प्रथमः ॥ १ ॥

---

१ अतीतायां तीर्थंकरचतुर्विंशतावेकोनविंशे तीर्थेशे । २ तुर्यो हल् घकार. ।

# अथ द्वितीयः काण्डः ।

[1] स्वस्त्रिदिवोऽस्त्री द्युर्दीदिविर्दिदिविर्दिविः ।
द्यो-दिवौ दिवमित्युक्तं त्रिविष्टप-त्रिपिष्टपे ॥ १ ॥
तोसातो वियस्तविशं विहेलिम-विशेलिमौ ।
सुरे दिवोका दिवौकास्तौ विहङ्गेऽपि, दैवतः ॥ २ ॥
देवताऽऽदित्याऽऽदितेयौ, सुधाऽभिनवदुग्धयोः ।
पीयूषमपि पेयूषं, व्यन्तरा वानमन्तराः ॥ ३ ॥
असंयुक्तलकारः स्याद् वेतालो व्यन्तरान्तरे ।
मार्तण्ड-मार्ताण्डौ मार्तण्डोऽर्के एतश ऐतशः ॥ ४ ॥
तुविर्भुविश्च द्वौ सान्तौ तपनस्तापनो भगः ।
भर्गो हरिर्हरिश्चानु-भानू पेरुश्च पारुवत् ॥ ५ ॥
भासन्तो भासयन्तोऽगो नगवत् तरु-शैलयोः ।
भुजगेऽप्यंशुराशुश्च महिरो मिहिरस्तथा ॥ ६ ॥
मुहिरो मुदिरस्तद्वद् मुचिरः सहुरिस्तथा ।
सुहुरिः सृणि-सरणी अव्यवी स्योन-स्यूनकौ ॥ ७ ॥
प्रद्योतनो द्योतनश्च वृषाकपिर्ष्कपी अरुः ।
अरूषो रूपज-रूपौ दिवि-द्युभ्यां परो मणिः ॥ ८ ॥
सूरस्तालव्यदन्त्यादिस्तालव्यादिः शुचिर्वृकः ।
कोद्रिंरिन्द्रोऽप्यरुः सान्तः किरणे द्युद्-द्युती रुचिः ॥९॥

---

१ तकारात् ताशब्दाच्च परो विष , तविष , ताविषश्चेत्यर्थं ।

रोचीं रुक् शुचियुक् शोचिर्भा-भासौ भाः प्रभा विभा ।
त्विट्-त्विपी प्रश्नि-पृप्णी च घृप्णिरभीश्वभीपुकौ ॥१०॥
रोचिः शोचिरिसन्तौ द्वौ, मयूखो ह्याद्यवर्ग्यखः ।
प्रकाशे द्योत उद्द्योतः, सान्तोऽदन्तो महो महः॥११॥
धाम नान्तमदन्तं च, तात्विपं तत्विपं तथा ।
वलेऽप्यथो विधौ राजा राजराजश्च चन्द्रिरः ॥ १२ ॥
चन्द्र-चन्दौ चन्द्रमसाऽमा विकुस्न-विकस्नकौ ।
विक्रस्नः सोम-सोमानौ यज्ञपेयरसेऽपि च ॥ १३ ॥
लाञ्छने लक्ष्मणं लक्ष्म लक्षणं, चन्दिरातपे ।
चन्द्रिका चन्द्रिमाऽपि स्यात्, मण्डले मण्डली मता॥१४॥
नक्षत्रे तारका तारा निरिकाराऽत्र तारका ।
अश्वयुज्याश्विकिनी चाश्विनी स्युः कृत्यका बहौ ॥१५॥
बहुलाश्च मृगशीर्षे मृगमार्गों मृगाच्छिरः ।
मृगशिराऽपि शीर्षस्थास्तारकास्तस्य त्विल्वलाः ॥१६॥
इन्वका मित्रदेवायामनुराधाऽनुराधिका ।
तृतीयवर्गद्वितीययुग् ज्येष्ठा मूल आश्रयः ॥ १७ ॥
तालव्यदन्त्ययोराप्यामषाढा ह्रस्वपूर्विका ।
श्रविष्ठा च धनिष्ठापि त्रिकवर्गद्वितीययुक् ॥ १८ ॥
तद्वत्प्रोष्ठपदा लग्नत्रिभागे तु दृकाणवत् ।
द्रिक-द्रेक्काण-दृक्काणाः, बुधे चान्द्रमसायनिः ॥ १९ ॥
चान्द्रमसायनश्चापि गुरौ गीर्पति-गीःपती ।
गीर्ष्पति-गीष्पती रेफ-विसर्ग-गजकुम्भ-पाः ॥ २० ॥

चतुर्ष्वेषु च वाग् वाग्मी प्रख्या आख्याः प्रचक्षसा ।
सकारान्तास्त्रयोऽमी स्युः, शुक्रे काव्य-कवी भृगुः॥२१॥
भार्गवेऽप्यर्कपुत्रे तु शनैश्चर-शनी शनैः ।
अव्ययं, सौरि-सौरौ द्वौ दन्त्य-तालव्यपूर्वकौ ॥२२॥
राहौ स्वर्भाणु-स्वर्भानू तमास्तमस्तमोऽपि च ।
द्वौ सान्तौ तृतीयोऽदन्तो, ध्रुव उत्तानपादकः ॥२३॥
औत्तानपादिः, कौम्भौ तु मैत्रावरुणि-वारुणी ।
मैत्रावरुण आग्नेय अग्निमारुत इत्यपि ॥ २४ ॥
अगस्त्येऽगस्तिरेकोक्त्या शशि-भास्करयोः पुनः ।
पुष्पदन्तौ पुष्पवन्तावुपलिङ्गमुपद्रवे ॥ २५ ॥
उपालिङ्गं रिष्टा-ऽरिष्टे माङ्गल्ये चाप्यनेहसि ।
कालेऽतिथोऽतिथः कालविशेषे सुषमा तथा ॥ २६ ॥
दुःषमा षोऽत्र मूर्धन्यः, काष्ठा त्वष्टादश स्मृताः ।
निमेषाष्टाग्रगो वर्णोऽत्र घट्यां नाडि-नाडिके ॥ २७ ॥
नाडी-नाली-नालिकाश्च, दिने तु दिवसो दिवम् ।
दिवा प्रतिदिवा नान्तौ द्युरस्त्र्यव्ययमप्यहः ॥ २८ ॥
अह्नयहे ङ्यन्त-टाबन्तावहः सन्तोऽथ वासरः ।
वाश्रश्च दन्त्य-तालव्यमध्यौ घस्रश्च हस्रयुक् ॥ २९ ॥
दिवाव्ययं सप्तम्यर्थे, व्युष्टं कल्यं सकाल्यकम् ।
उषः-प्रत्युषसी सान्तौ प्रत्यूषोऽपि प्रगेऽव्ययम् ॥३०॥
प्राह्णे पूर्वेद्युरेतौ च गोस-गोसर्गकौ समौ ।
मध्याह्ने तु दिवामध्यं मध्यं मध्यंदिनं तथा ॥ ३१ ॥

दिनावसाने सायोऽस्त्री सायं स्याद् मान्तमव्ययम् ।
पितृप्रस्वं सन्धा सन्ध्या सन्धिश्चापि विभावरौ ॥३२॥
विभावरी निशा निट् च निशीथश्च निशीथिनी ।
निशीथ्या वासुरा मध्यदन्त्य-तालव्ययुक्; तमिः ॥३३॥
तमी तमा तामसी च वसतिर्वासतेय्यपि ।
शार्वरी सर्वरी दन्त्यतालव्यादिरुषा उषः ॥ ३४ ॥
उसास्त्रयोऽमी सान्ताः स्युरुषा दोषाऽप्यनव्यये ।
अव्यये च तथाऽऽदन्तौ, रजनी रजनिः स्मृता ॥३५॥
त्रियामा यामिनी यामा याम्या रात्री च रात्रियुक् ।
नक्ता नक्तं तथा नक्तं मान्तमव्ययमप्यथो ॥ ३६ ॥
ज्योत्स्नायुक्तक्षपायां तु ज्योत्स्नी ज्योत्स्नापि, दर्शनिट्।
तमिस्रा दन्तसंयोगा द्युः पक्षी निड्द्वयावृतः ॥ ३७ ॥
ध्वान्ते तमं तमोऽदन्तौ, तमसं तमसस्तमः ।
सान्तं, तमिस्रा तमिस्रं सदन्त्यौ, तिमिरं तथा ॥ ३८ ॥
सन्तमसा-ऽवतमसे अन्धातमसमन्धतः ।
तमसं चाऽन्धकारान्धे भूच्छायमनृलिङ्गकम् ॥ ३९ ॥
तुल्याहर्निशि विपुशो विपुवद् विशुवं तथा ।
विपुवं, बहुलः कृष्णपक्षे मध्य उकारवान् ॥ ४० ॥
पूर्णिमायां पौर्णमासी, दर्शोऽमावास्यमावसी ।
अमावस्याऽमाऽमावास्या, नष्टेन्दौ तु कुहुः कुहूः ॥४१॥
चतुर्दशी विध्वदर्शे शिनीवाली सयुग्मभाक् ।
मासे माः स्याद् वर्षकोशो वर्षांशकयुतस्तथा ॥ ४२ ॥

मार्गशीर्षे मार्ग-सहौ सहाः सान्तोऽथ माघके।
तपाः सान्तो द्वयोस्त्रियां स्यात्, फल्गुनाले तु फाल्गुनः॥४३॥
फल्गुनश्च फाल्गुनिको, मधौ चैत्रः सचैत्रिकः।
शुक्रे तु ज्येष्ठा-मूलयोर्ज्येष्ठ-ज्यैष्ठौ त्रयोप्यऽमी॥ ४४॥
त्रिकवर्गद्वितीयासपसंयोगाः, शुचौ पुनः।
अषाढ आषाढोऽपि स्यात्, नभसि श्रावणः स्मृतः॥४५॥
श्रावणिकोऽथ नभस्ये भाद्र-भाद्रपदौ समौ।
प्रौष्ठपदस्त्रिकवर्गद्वितीयास्तो ह्यथाश्विने॥ ४६॥
अश्वयुज आश्वयुजो, बाहुले कार्तिकस्तथा।
कार्तिकिकः प्रशलर्तौ हेमन्तो नान्तहेमयुक्॥ ४७॥
शैप-शिशिरौ तालव्योपेतौ ग्रीष्मर्तुरूष्मकः।
ऊष्मायण ऊष्मा नान्त उष्ण उष्णागमोष्णकौ॥ ४८॥
प्रावृषि प्रावृषा वर्षा बहुले वरिषास्तथा।
घनात्यये तु शरदा शरच्चाब्दे तु वत्सरः॥ ४९॥
उद्वत्सर-संवत्सर-परिवत्सर-वत्सराः।
अनुसंवत्सरो विवत्सरो वत्सोऽपि वर्षवत्॥ ५०॥
वरिषः शारदोपेता शरत् संवदनव्ययम्।
अव्ययं च, समा स्त्रीत्वे वा बहुले च तद्विदि॥ ५१॥
इडुत्सरेडावत्सरौ क्षये कल्पान्तकल्पकौ।
संवर्तः परिवर्तश्च सांदृष्टिक-सांमृष्टिके॥ ५२॥
तात्कालिकफले प्रोक्ते, आकाशे द्यो-दिवौ द्यु च।
क्लीबं सन्तं नभश्चापि नभसो नभसं तथा॥ ५३॥

अन्तरिक्षमन्तरीक्षं मेघे घन-घनाघनौ ,
ऋञ्जसानो रिञ्जसान उभ्रोऽभ्रमब्धमित्यपि ॥ ५४ ॥
गडयित्नुर्गदयित्नुर्वारितो वाह-वाहनौ ।
पर्जन्योऽष्टमवर्ग्यान्तोऽब्दमालायां तु कालिका ॥ ५५ ॥
काली वृष्ट्यां वर्षणं स्याद्वर्षं, तद्विघ्नके त्ववात् ।
ग्रह-ग्राहौ, घनोपले तु करः करकस्त्रिषु ॥ ५६ ॥
आशायां दिग्-दिशे काष्ठा त्रिकवर्गद्वितीयभाक् ।
ककुभा ककुब् याम्याशाऽपाच्यवाची दिगन्तरे ॥५७॥
विदिक् प्रदिक् चापदिशं प्राक्-प्राचीने समे मते ।
अपाचीनमपाक् प्रत्यक् प्रतीचीनमुदक् तथा ॥५८॥
उदीचीनमपाक् प्रत्यक् प्रागुदगव्ययान्यपि ।
इन्द्रे मघवा मघवान् मघवन् दल्मि-वल्मिकौ ॥ ५९ ॥
नान्तौ सुत्रामा सूत्रामा हर्यश्वो हरिमान् हरिः ।
बिडोजाः स्याद् बिडौजाश्च सन्तौ, वृत्रश्च वृत्रहा ॥६०॥
पर्जन्यः पूर्ववन्नान्तो वृषा दन्त्यद्वयान्वितः ।
तालव्यद्वयवानाद्यतालव्यश्च तृतीयकः ॥ ६१ ॥
शुनाशीरः, स्मृतेन्द्राण्यां महेन्द्राणी सची शची ।
शचिर्वासैवौ जयन्तः जयदत्तो जयस्तथा ॥ ६२ ॥
इन्द्रपुत्र्यां ताविषी स्याद् वात्यायां च तविष्यपि ।
इन्द्रहस्तिन्यैरावण ऐरावतः, ऋजौ घनौ ॥ ६३ ॥
इन्द्रस्यर्जुरोहितं स्याद् रोहितं पारिभद्रके ।

१ वासवस्यापत्यं वासविस्तस्मिन् ।

मन्दार-मन्दरौ तद्वद् मन्दारुश्च, पवौ सृणिः ॥ ६४ ॥
सृणिश्च वह्नावप्येतौ, भिदिरं भिदुरं भिदुः ।
भिदि-भेदी दिभिः शम्ब-सम्बौ शाम्बः शतारकः ॥६५॥
धारः शित-शतात्, वज्रोऽस्त्रियां वज्राशनिर्द्वयोः ।
अशनिर्द्वयोराशनः स्वार्थे प्रज्ञाद्यणा, शरुः ॥ ६६ ॥
स्वरु-श्वरू उदन्तौ द्वौ स्वरुः सान्तोऽथ पैण्ढके ।
[1]व्याधाम नान्तं, व्याधामोऽदन्तः पुंसि च, दस्रयोः ॥६७॥
अश्विनावाऽश्विनेयौ[2] च, देवत्वष्टरि विश्वकृत् ।
विश्वकर्मापि, स्वर्वेश्या वै[3] स्त्री भून्म्यप्सरा मता ॥६८॥
ऊर्वसी दीर्घ-ह्रस्वादिर्दन्त्य-तालव्यभाक् क्रमात् ।
गन्धर्वो गायने दैवे[4] गान्धर्वोऽपि च तद्विदि ॥ ६९ ॥
अव्ययाऽनव्ययौ हाहा हाहा. सान्तोऽप्यथो हूहाः ।
हुहुर्द्विहस्वो हूहूश्च द्विदीर्घोऽव्ययमप्यथो ॥ ७० ॥
हाहाहूहूरित्यखण्डं नामैके, शमने यमः ।
यमराजो यमराट् च, संयमनी त्र्यकारयुक्[5] ॥ ७१ ॥
शङ्कावश्रपोऽन्तर्दन्त्योपि, हनुपो हनूपवत् ।
रात्रिचरो रात्रिचरो, नृचक्षाः श्याश्च चक्षसा ॥७२॥
त्रयः सान्ता [6]अन्त्यपण्ढाः, क्रव्यात् क्रव्यादसंयुतः ।

---

१ नपुंसकलिङ्गे नान्तो व्याधामशब्द । २ स्त्रीलिङ्गोऽप्सर शब्दो विकल्पेन भूम्नि- बहुवचने मत इत्यर्थं । ३ दीर्घो ह्रस्वश्चादिर्यस्य, तथा दन्त्यं तालव्य च भजते स , ऊर्वसी, उर्वसी, ऊर्वशी, उर्वशी, इति चत्वार शब्दा ।
४ देवसम्बन्धिनीत्यर्थं । ५ अकारत्रययोगवान् संयमनीशब्दो यमपुरीवाचक ।
६ अन्त्यश्चक्ष शब्द पण्ढो नपुंसको यत्र ते, इति सान्तविशेषणम् ।

अन्तरिक्षमन्तरीक्षं मेघे घन-घनाघनौ ।
ऋज्रसानो रिज्रसान उभ्रोऽभ्रमब्धमित्यपि ॥ ५४ ॥
गडयित्नुर्गदयित्नुर्वारितो वाह-वाहनौ ।
पर्जन्योऽष्टमवर्ग्यातोऽब्दमालायां तु कालिका ॥ ५५ ॥
काली वृष्ट्यां वर्षणं स्याद्वर्षं, तद्विमके त्ववात् ।
ग्रह-ग्राहौ, घनोपले तु करः करकस्त्रिषु ॥ ५६ ॥
आशायां दिग्-दिशे काष्ठा त्रिकवर्गद्वितीयभाक् ।
ककुभा ककुब् याम्याशाऽपाच्यवाची दिगन्तरे ॥५७॥
विदिक् प्रदिक् चापदिशं प्राक्-प्राचीने समे मते ।
अपाचीनमपाक् प्रत्यक् प्रतीचीनमुदक् तथा ॥५८॥
उदीचीनमपाक् प्रत्यक् प्रागुदगव्ययान्यपि ।
इन्द्रे मघवा मघवान् मघवन् दल्मि-वल्मिकौ ॥ ५९ ॥
नान्तौ सुत्रामा सूत्रामा हर्यश्वो हरिमान् हरिः ।
बिडोजाः स्याद् बिडौजाश्च सन्तौ, वृत्रश्च वृत्रहा ॥६०॥
पर्जन्यः पूर्ववन्नान्तो वृषा दन्त्यद्वयान्वितः ।
तालव्यद्वयवानाद्यतालव्यश्च तृतीयकः ॥ ६१ ॥
शुनाशीरः, स्मृतेन्द्राण्यां महेन्द्राणी सची शची ।
शचिर्वासवौ[१] जयन्तः जयदत्तो जयस्तथा ॥ ६२ ॥
इन्द्रपुत्र्यां ताविषी स्याद् वात्यायां च तविष्यपि ।
इन्द्रहस्तिन्यैरावण ऐरावतः, ऋजौ घनौ ॥ ६३ ॥
इन्द्रस्यर्जुरोहितं स्याद् रोहितं पारिभद्रके ।

१ वासवस्यापत्य वासविस्तस्मिन् ।

मन्दार-मन्दरौ तद्वद् मन्दारुश्च, पत्रौ शृणिः ॥ ६४ ॥
सृणिश्च वल्लावप्येतौ, भिदिरं भिदुरं भिदुः ।
भिदि-भेदी द्विभिः शम्ब-सम्बौ शाम्बः शतारकः ॥६५॥
धारः शित-शतात्, वज्रोऽस्त्रियां वज्राशनिर्द्वयोः ।
अशनिर्द्वयोराशनः स्वार्थे भ्रशाघणा, शरुः ॥ ६६ ॥
स्वरु-श्वरू उदन्तौ द्वौ स्वरुः सान्तोऽथ पैण्ढके ।
व्याधाम नान्तं, व्याधामोऽदन्तः पुंसि च, दस्रयोः ॥६७॥
अश्विनावाऽश्विनेयौ च, देवत्वष्टरि विश्वकृत् ।
विश्वकर्मापि, स्वर्वेश्यां वा स्त्री भूम्न्यप्सरा मता ॥६८॥
ऊर्वसी दीर्घ-ह्रस्वादिर्दन्त्य-तालव्यभाक् क्रमात् ।
गन्धर्वो गायने दैवे गान्धर्वोऽपि च तद्विदि ॥ ६९ ॥
अव्ययाऽनव्ययौ हाहा हाहाः सान्तोऽप्यथो हूहाः ।
हुहुर्द्विह्रस्वो हूहूश्च द्विदीर्घोऽव्ययमप्यथो ॥ ७० ॥
हाहाहूहूरित्यखण्डं नामैके, शमने यमः ।
यमराजो यमराट् च, संयमनी त्र्यकारयुक् ॥ ७१ ॥
शङ्कावश्चपोऽन्तर्दन्त्योपि, हनुपो हनूपवत् ।
रात्रिचरो रात्रिचरो, नृचक्षाः स्याश्च चक्षसा ॥७२॥
त्रयः सान्ता अन्त्यपण्ढाः, क्रव्यात् क्रव्यादसंयुतः ।

---

१ नपुंसकलिङ्गे नान्तो व्याधामशब्द । २ स्त्रीलिङ्गोऽप्सर शब्दो विकल्पेन भूम्नि- बहुवचने मत इत्यर्थं । ३ दीर्घो ह्रस्वश्चादियस्य, तथा दन्त्यं तालव्य च भजते स, ऊर्वसी, उर्वसी, ऊर्वशी, उर्वशी, इति चत्वार शब्दा । ४ देवसबन्धिनीत्यर्थं । ५ अकारत्रययोगवान् सयमनीशब्दो यमपुरीवाचक । ६ अन्त्यश्चक्ष शब्द षण्डो नपुंसको यत्र ते, इति सान्तविशेषणम् ।

जातुधानो यातुधानो जातु यातु च पण्ढकौ ॥७३॥
कर्बुरः कर्वरो रक्षः राक्षसोऽप्याशराऽऽशिरौ ।
तज्जनन्यां तु निकसा निकषा खषया सह ॥ ७४ ॥
वरुणे यादःपतियुक् यादसांपतिरप्पतिः ।
अपांपतिर्धनदे त्वैडविडैलविलौ समौ ॥ ७५ ॥
कैलासौका मध्यदन्त्यो नराद् वाहण-वाहनौ ।
तद्विमानं पुष्पकं स्याद् मूर्द्धन्यौष्ठ्यकयोगयुक् ॥७६॥
वस्वोकसारा तत्पुर्यामोकःशब्दे सलोपभाक् ।
वित्ते ऋक्थं रिक्थमृक्तं रिक्तः सान्तं नपुंसके ॥ ७७ ॥
सारोऽस्त्रियां निधाने तु शेवाधिर्नरे-षण्ढभाक् ।
शङ्करे जोटी जोटीङ्गो गिरीशो गिरिशो हरः ॥ ७८ ॥
हीर ईशान ईशश्च वामदेवश्च वामयुक् ।
अहिर्बुध्नो बुध्नकाही महाकालः सकालकः ॥ ७९ ॥
भर्गो भार्गो भर्ग्यः शर्व-सर्वौ महेश्वरेश्वरौ ।
भीम-भीष्मौ च, तच्चापे त्वजकावमजीजकम् ॥ ८० ॥
अजगावमाजगवं भवेदजकवं तथा ।
अजगवं, गणेष्वस्य पार्षद्याः पार्षदा अपि ॥ ८१ ॥
पारिषद्याः पारिषदा, मृडान्यामीश्वरेश्वरी ।
कैटभी कैटभा दुर्गा दुर्गमा वरदा वरा ॥८२॥
अपर्णा चैकपर्णायुग् गौरी गौरा शिवी शिवा ।

---

१ राक्षसमातरि । २ धनदविमानम् । ३ वसूनामोकस्य सारो यत्र सा। ४ पुंनपुंसक इत्यर्थः । ५ बुध्नकश्च अहिश्च । ६ महेशचापे । ७ महेशस्य । ८ ईश्वरा, ईश्वरी ।

भद्रकाली महाकाली काली काला च कालिका ॥८३॥
हिमा हैमवतीयुक्ता विकराला करालिका ।
महारौद्री सरौद्रीका जयन्ती विजया जया ॥ ८४ ॥
महाजया नन्दयन्ती नन्दिनी नन्दयाऽन्विता ।
सुनन्दा कुला नकुली, भैरव्यां चर्ममुण्डिका ॥ ८५ ॥
चामुण्डा चण्डमुण्डा च चर्चा चर्चिः सचर्चिका ।
स्कन्दे गाङ्गायनिर्गाङ्गो गाङ्गेयो भीष्मकेऽप्यमी ॥ ८६ ॥
भृङ्गिगणे भृङ्गिरिटिर्भृङ्गिरीटिश्च, तण्डुके ।
नन्दीश-नन्दिनौ नन्दिः, केमने क-कवी विधिः ॥८७॥
विधा वेधाश्च द्वौ सान्तौ सर्वविद्-विदुषोरपि ।
विरिञ्चन-विरिञ्ची च विरिञ्चः परमेष्ठियुक् ॥८८॥
परमेष्ठ्यलिकवर्गद्वितीयकलितावैभू ।
नाभिभूर्नाभिजन्मा च विश्वसृट् विश्वसृक् तथा ॥८९॥
द्रुहिणो द्रुघणस्तद्वद् द्रुघनोऽपि च शम्भुयुक् ।
स्वयंभूरथ गोविन्दे नारायण-नरायणौ ॥ ९० ॥
विष्वक्सेनो विश्वक्सेनो वृषाकपि-कपी विधुः ।
वेधा मुकुन्द-कुन्दौ च वासुदेवश्च वासुयुक् ॥ ९१ ॥
जलेशयो जलशयोऽधोक्षजोऽक्षज एकपात् ।
त्रिपाद् द्विपद एतद्वद् वृषाक्षः सुवृषोऽपि च ॥ ९२ ॥
कपिलो भद्रकपिलः सुभद्रो वासुभद्रकः ।

---

१ भानरि । २ परमेष्ठि-परमेष्ठी ।

धन्वी सुधन्वा शतकः शतादाऽऽनन्द-चीरकौ ॥ ९३ ॥
श्रीवत्साङ्कश्च श्रीवत्सस्तंदरौ मेन्द-मैन्दकौ ।
कालीयः कालियश्चास्य गदा कौमोदकी स्मृता ॥९४॥
कौपोदकी कौवोदकी, कृष्णमातरि देवकी ।
दैवकी, बलभद्रे तु भद्राङ्गो बलिना बलः ॥ ९५ ॥
पद्मायामीरी आ या च कमला कमलेन्दिरा ।
इन्दिः श्री-लक्ष्म्यौ किव्यन्तौ, वैरौ शम्बर-संवरौ ॥९६॥
शूर्पकश्चादितालव्यः, ऋष्याङ्कः कामनन्दने ।
मूर्द्धन्याद्यान्तःस्थिकभागूषोषा बाणपुत्रिका ॥ ९७ ॥
शम्ब-शाम्बौ जम्बुवत्याः पुत्रे, तार्क्ष्ये सुपर्णकः ।
सौपर्णेयो गरुडश्च गरुलो गरुटस्तथा ॥ ९८ ॥
सुगते तु महाबोधि-बोधी बुद्ध-बुधौ मुनिः ।
मुनीन्द्रः, सप्तमे बुद्धे शाक्यसिंहः सशाक्यकः ॥९९॥
दैत्येऽसुर आसुरश्च सरस्वत्यां गिरा-गिरौ ।
वाग्-वाचे वाणि-वाण्यौ च तालव्याद्या च शारदा॥१००॥
व्याहारो वचो वचनं, कारके कर्म-कार्मणे ।
ज्ञाताधर्मकथायां स्यात् तकारो दीर्घसंयुतः ॥ १०१ ॥
द्वादशाङ्गे दृष्टिवादो दृष्टिपातोऽपि कथ्यते ।
प्रत्याख्यानप्रवादे तु प्रत्याख्यातं च, ज्योतिषि ॥१०२॥
ज्योतिषं ज्यौतिषं, भाष्ये चूर्णि-चूर्ण्यौ समे मते ।

१ गोविन्दशत्रौ । २ गोविन्दस्य । ३ अनुक्रम क्विप्, इश्च प्रत्ययोऽन्ते ययोस्तौ । ४ इ कामस्तस्यारिर्येरिस्तस्मिन् । ५ ऋष्याङ्कविशेषणम् । ६ पद्याक्षरूपस्य मन्त्रविशेषस्य नाम ।

यङ्लुगन्ते चर्करीतं चर्करितं, कलिन्दिका ॥१०३॥
कडिन्दिका सर्वविद्या, निघण्टुर्नामसंग्रहे ।
निर्घुण्टुश्च, जनश्रुतौ वदन्ती किंवदन्त्यपि ॥ १०४ ॥
किंवदन्तिर्वदन्तिश्चोदन्ते वृत्तान्त-वार्त्तिके ।
अभिधायां नामधेयं नामाख्याऽभिख्ययाऽऽह्वयः ॥१०५॥
आह्वा, हूतौ तु हक्कार-कङ्कारौ, शपथे शपः ।
शपनं, प्रियचाटुल्ये चटु चाटु, यथास्थिते ॥ १०६ ॥
तथ्यं यथातथं सम्यक् समीचीनं च, रूक्षके ।
निष्ठुरं तृतीयवर्गद्वितीययुगवर्णने ॥ १०७ ॥
निष्पर्यपात्परो वादो, जुगुप्सा च जुगुप्सनम् ।
गर्हणा गर्हणं गर्हा, रुतशापे तु क्षारणा ॥ १०८ ॥
आक्षारणा क्षारणं च क्षरणा, मङ्गलार्थने ।
आशीराशषया चोभे उशत्यशुभवाचि तु ॥१०९॥
रुशती रुषती सर्वे त्रिलिङ्गा वाच्यलिङ्गतः ।
आज्ञायां स्याद् निराङ्निभ्यो देशोऽथाङ्गीकृतौ पुनः॥११०॥
संध्या स्यात् संधया साकं संप्रत्याङ्भ्यः परः श्रवः ।
वर्जे वर्जनं वृजनं, नृत्ये नृत्तं च नर्त्तनम् ॥१११॥
नाट्यं नटनमङ्गविक्षेपेऽङ्गाद् हारि-हारकौ ।
आतोद्ये वाद्यं वादित्रं तूरं तूर्यं च, वल्लकी ॥११२॥
तन्त्रीस्तन्त्रिश्च गन्धर्वे त्र्युकारस्तुम्बुरुः स्मृतः ।

१ निर्वादः, परिवादः, अपवादश्चेत्यर्थः । २ निर्देशः, आदेशः, निदेशश्चेत्यर्थः । ३ संश्रवः, प्रतिश्रवः, आश्रवश्चेत्यर्थः ।

मृदङ्गे मार्दलीकश्च मार्दलो, दुन्दुभौ पुनः ॥ ११३ ॥
भेरिर्भेरी च भेरापि, कुहालायां तु काहला ।
चण्डकोलाहला पत्रकाहला, सुसवोधके ॥ ११४ ॥
द्रगडो द्रकटश्चापि, झल्लर्यां झर्झरी स्मृता ।
झलरी, बीभत्सरसे विकृतं वैकृतं तथा ॥ ११५ ॥
घर्घरे हासिका हास्यं हासश्च हसनं हसः ।
त्रिकवर्गद्वितीयासा स्मिते वक्रोष्ठिका मता ॥ ११६ ॥
शोचने शुक् शुकः शोकः, कोपे क्रोध-क्रुधा-क्रुधः ।
रुषा-रोष-रुषश्चाप्युत्साहे तूद्याम उद्यमः ॥ ११७ ॥
उद्योगोऽप्यभियोगश्च वीर्यं त्वतिशयान्विते ।
वीर्यापि, साध्वसे भीतिर्भीर्भिया भयमप्यथो ॥११८॥
भयङ्करे भीम-भीष्मे डमरं डामरं तथा ।
उड्डामरमुड्डमरं, शान्तावुपशमः शमः ॥ ११९ ॥
शमथोऽप्यथ रोमाञ्चे पुलकः पुलसंयुतः ।
बाष्पे[1]ऽश्रुस्रू अस्रमश्रं, चित् तान्ता चेतना, मतौ॥१२०॥
धीर्धीदा प्रतिपत्तिश्च प्रतिपच्छेमुषी पुनः ।
तालव्यादिर्मूर्धन्यान्ता, लज्जायां स्यादपत्रपा ॥१२१॥
त्रपा ह्री ह्रीकया ह्रीका व्रीडा व्रीडो, मनःखिदि ।
सादाऽवसादौ, निद्रायां तन्द्रिस्तन्द्रीश्च तन्द्रया॥१२२॥
तन्द्र्यमी चत्वारः शब्दाः स्युर्मोहाऽऽलस्ययोरपि ।
औत्सुक्य उत्कण्ठौत्कण्ठ्ये, आकारस्य तु गूहने ॥ १२३ ॥

१ अश्रु, अस्रुश्च ।

[1]कुटारिका केर्टिकाऽऽवाद्, ह्लादे मोदः प्रमोदयुक्।
मुदाऽऽमोदौ प्रमदश्च संमदोऽपि मदो मुदा ॥ १२४ ॥
हर्ष-प्रहर्ष-हरिषा आनन्दानन्दथू समौ।
गर्वेऽभिमान-मानौ च विस्मयः स्मय इत्युभौ ॥१२५॥
[2]तद्विशेषेऽहंपूर्वा-पूर्विका-प्रथमिकाऽग्रिकाः।
व्यायामे तु क्लम-क्लमी परिश्रम-श्रमावपि ॥ १२६ ॥
चिन्तायां चिन्तिया ध्यानं ध्याम नान्तं नपुंसके।
प्रतिचिकीर्षारूपे तु ध्याने मर्ष आमर्षकः ॥१२७॥
चित्तस्थैर्ये मनस्कारो भवेद् मनसिकारयुक्।
संभ्रमे त्वरया तूर्णिरत्वरिस्तर्के वितर्ककः ॥ १२८ ॥
संवेगावेगा[3]वूहेहे परामर्शो विमर्शनम्।
मृत्यौ मृतिः सर्वगे मरि-मारी मरकोऽपि च ॥१२९॥
नटे भारत-भरतौ तथा भरतपुत्रकः।
स्त्रीवेषधारकनटे भ्रकुंसः सभ्रुकुंसकः ॥ १३० ॥
भ्रूकुंसश्च भ्रूकुंसोऽपि, केलीकिलो विदूषके।
केलिकिलो वासन्तिक-वसन्तकौ च, हासिनि ॥१३१॥
केलिकिलः कैलिकिलो, विलासिनि जने पुनः।
हेलिहिलो हेलिहिलः, आर्ये मारिष-मार्षकौ ॥ १३२ ॥
[4]चेटी-नीचा-सखीह्वाने हण्डे हञ्जे हलाव्ययाः।

---

१ भयकटिकेत्यर्थः। २ गर्वविशेषे अहंपूर्वा, अहंपूर्विका, अहंप्रथमिका, अहमग्रिका चेत्यर्थः। ३ ऊह ईहा च। ४ चेट्याः, नीचायाः सख्याश्च ह्वाने यथाक्रमं हण्डे, हञ्जे हला चेति।

मृदङ्गे मार्दलीकश्च मार्दलो, दुन्दुभौ पुनः ॥ ११३ ॥
भेरिर्भेरी च भेरापि, कुहालायां तु काहला ।
चण्डकोलाहला पत्रकाहला, सुखबोधके ॥ ११४ ॥
द्रगडो द्रकटश्चापि, झल्लर्यां झर्झरी स्मृता ।
झलरी, बीभत्सरसे विकृतं वैकृतं तथा ॥ ११५ ॥
घर्घरे हासिका हास्यं हासश्च हसनं हसः ।
त्रिकवर्गद्वितीयात्ता स्मिते वक्रोष्ठिका मता ॥ ११६ ॥
शोचने शुक् शुकः शोकः, कोपे क्रोध-क्रुधा-क्रुधः ।
रुषा-रोष-रुषश्चाप्युत्साहे तूद्यम उद्यमः ॥ ११७ ॥
उद्योगोऽप्यभियोगश्च वीर्यं त्वतिशयान्विते ।
वीर्यापि, साध्वसे भीतिर्भीर्भिया भयमप्यथो ॥११८॥
भयङ्करे भीम-भीष्मे डमरं डामरं तथा ।
उड्डामरमुड्डमरं, शान्तावुपशमः शमः ॥ ११९ ॥
शमथोऽप्यथ रोमाञ्चे पुलकः पुलसंयुतः ।
बाष्पेऽश्रुस्रू[1] अस्रमश्रं, चित् तान्ता चेतना, मतौ॥१२०॥
धीर्धीदा प्रतिपत्तिश्च प्रतिपच्छेमुषी पुनः ।
तालव्यादिर्मूर्धन्यान्ता, लज्जायां स्यादपत्रपा ॥१२१॥
त्रपा ह्री ह्रीकया ह्रीका व्रीडा व्रीडो, मनःखिदि ।
सादाऽवसादौ, निद्रायां तन्द्रिस्तन्द्रीश्च तन्द्रया॥१२२॥
तन्द्र्यमी चत्वारः शब्दाः स्युर्मोहाऽऽलस्ययोरपि ।
औत्सुक्य उत्कण्ठौत्कण्ठ्ये, आकारस्य तु गूहने ॥ १२३ ॥

१ अश्रु , अस्रुश्च ।

कुटारिका कंटिकाऽवाद्, ह्लादे मोदः प्रमोदयुक् ।
मुदाऽऽमोदौ प्रमदश्च संमदोऽपि मदो मुदा ॥ १२४ ॥
हर्ष-प्रहर्ष-हरिषा आनन्दानन्दथू समौ ।
गर्वेऽभिमान-मानौ च विस्मयः स्मय इत्युभौ ॥१२५॥
तद्विशेषेऽहंपूर्वा-पूर्विका-प्रथमिकाऽग्रिकाः ।
व्यायामे तु क्रम-क्रमी परिश्रम-श्रमावपि ॥ १२६ ॥
चिन्तायां चिन्तिया ध्यानं ध्याम नान्तं नपुंसके ।
प्रतिचिकीर्षारूपे तु ध्याने मर्ष आमर्षकः ॥१२७॥
चित्तस्थैर्ये मनस्कारो भवेद् मनसिकारयुक् ।
संभ्रमे त्वरया तूर्णिस्त्वरिस्तर्के वितर्ककः ॥ १२८ ॥
सवेगावेगावूहेहे परामर्शो विमर्शनम् ।
मृत्यौ मृतिः संवेगे मरि-मारी मरकोऽपि च ॥१२९॥
नटे भारत-भरतौ तथा भरतपुत्रकः ।
स्त्रीवेषधारकनटे भ्रकुंसः सभ्रुकुंसकः ॥ १३० ॥
भ्रूकुंसश्च भृकुंसोऽपि, केलीकिलो विदूषके ।
केलिकिलो वासन्तिक-वसन्तकौ च, हासिनि ॥१३१॥
केलिकिलः कैलिकिलो, विलासिनि जने पुनः ।
हेलिहिलो हैलिहिलः, आर्ये मारिष-मार्षकौ ॥ १३२ ॥
चेटी-नीचा-सखीह्वाने हण्डे हञ्जे हलाव्ययाः ।

---

१ अवकटिकेत्यर्थः । २ गर्वविशेषे अहंपूर्वा, अहंपूर्विका, अहंप्रथमिका, अहमग्रिका चेत्यर्थः । ३ ऊहः ईहा च । ४ चेट्या, नीचाया सख्याश्च ह्वाने यथाक्रम हण्डे, हञ्जे हला चेति ।

अत्तिकाऽप्यन्तिका ज्येष्ठभगिन्यां, मातरि स्मृता॥१३३॥
अम्बिकाऽप्यंबिका, भट्टारक-भट्टौ तु पूज्यगात् ।
नाम्नः प्रयोज्यौ प्रायेण नाट्योक्तौ नाट्यवाचकाः ॥१३४॥

इति वादीन्द्रश्रीसाधुकीर्त्युपाध्यायमिश्रशिष्यलेशेन वाचनाचार्यसाधुसुन्दरगणिना विरचितायां शब्दरत्नाकरनामशब्दप्रभेदनाममालायां देवकाण्डो द्वितीयः ॥ २ ॥

---

## अथ तृतीयः सर्गः ।

---

पुंसि पूरुष-पुरुषौ पुलषो ना नरोऽपि च ।
मनुष्यो मानुषो मर्त्यो मर्तोऽपि, बालिशः शिशौ ॥१॥
बालः क्षीरात् कण्ठः पश्च स्तनयः सस्तनन्धयः ।
कुमार-कुमरौ दहू-दहरावथ शैशवे ॥ २ ॥
बाल्यवद् बालिमा पाकं पाकिमा नौ, वयस्यके ।
युवा युवानस्तरुणस्तलुनश्चाथ यौवनम् ॥ ३ ॥
यौवनिकापि तारुण्ये, स्थविरे तु जरन् जरी ।
जरन्तश्च जीन-जीर्णावतिवृद्धे दशम्ययम् ॥ ४ ॥
दशमीस्थोऽथ संस्तान्तः प्राज्ञो ज्ञः प्रज्ञकः कविः ।
कवी स्त्री कविता काव्यो वैदुषो विदुषस्तथा ॥ ५ ॥
विद्वांश्च शूरि-सूरी तु सूर्येऽपि, बुद्धयुग् बुधः ।
प्रवीणे निष्ण-निष्णातौ नदीष्णः कृतकृत्यकः ॥६॥

१ क्षीरकण्ठः, क्षीरपश्चेत्यर्थः । २ पुंलिङ्गः ।

कृती कृतार्थश्च विज्ञोऽभिज्ञो वैज्ञानिकोऽपि च ।
विदग्धे छेक-च्छेकालौ छेकिलश्च, कलाविदि ॥ ७ ॥
कलाज्ञश्च कलज्ञोऽपि, क्षुण्णः संस्कृतवाचकः ।
तृतीयवर्गप्रान्त्याप्तो, वक्नुर्वग्नु-र्वचक्नुकौ ॥ ८ ॥
वाग्मिनि स्यात्, वक्तरि तु वदावद-वदौ समौ ।
अवाक्श्रुतावेडमूकानेडमूकावनेडकः ॥ ९ ॥
कलमूकश्चान्ध-शठ-मूर्खवाच्यपि संमतः ।
सतामनेडमूकश्चाऽस्फुटवाचि तु काहलः ॥ १० ॥
लोहलोऽपि जड-कडौ, ज्ञायके विदुरस्तथा ।
विन्दुस्त्रिक-तुर्यवर्गमध्यौ कट्टर-कद्दरौ[1] ॥ ११ ॥
अत्यन्तकुत्सिते, क्षिप्णुर्णान्तो निराकरिष्णुके ।
प्रियंवदे शक्नु-शक्नौ वदान्यश्च वदन्ययुक्[2] ॥ १२ ॥
दानशीलेऽप्यमू, मूर्खे बालिशो बाडिशो जडः ।
जलो मुहेर-मुहिरावायोऽयःपूर्वशूलिकः[3] ॥ १३ ॥
भवेद् राभसिके, लोकप्रीणके तु पृण-प्रिणौ ।
प्रीणश्च लोकंपूर्वाः[4] स्युः, परायत्ते परात्परौ[5] ॥ १४ ॥
वश-वन्तौ गृह्यकश्च गृह्या-ऽऽगृह्यकसंयुतः ।
नायके नेत्र-नेतारावीडीश[6] ईश्वरस्तथा ॥ १५ ॥

१ तृतीयवर्गस्य टकारः, चतुर्थवर्गस्य दकारश्च मध्ये ययोरेतादृशौ कट्टर-कद्दरावित्यर्थः । २ वदान्य-वदन्यौ । ३ आयोऽयःशब्दौ पूर्वौ यस्य तादृशः शूलिकशब्द आयःशूलिक अयःशूलिकश्चेत्यर्थः । ४ लोकम्पृणः, लोकम्प्रिणः, लोकम्प्रीणश्चेत्यर्थः । ५ परवशः, परवांश्चेत्यर्थः । ६ ईड्, तालव्यशन्तः ।

पति-पाती ऋज-रिजाविडीडौ डान्तिमावुभौ ।
ह्रस्व-दीर्घादी[1] प्रभुयुग् विभुश्चाप्यथ वेतने ॥ १६ ॥
भृति-भृत्ये भर्म भर्मण्या कर्मण्याऽथ भारिके ।
भारवाड् भारवाहश्चाप्यथो वार्तावहे जने ॥ १७ ॥
वैवधिको विवधिको वीवधिकोऽथ भारके ।
भरो विवधो वीवधः स्यादथो भारयष्टिका ॥ १८ ॥
विहङ्गिका विहङ्गिमा, विक्रान्ते शूर-सूरकौ ।
कातरे भीरुको भीरुर्भीलुकस्त्रस्नु-त्रस्तकौ ॥ १९ ॥
भृशाकुले समुत्पिञ्ज उत्पिञ्जल-कपिञ्जलौ ।
अथो महेच्छेऽनुदार उदारोदात्तकावपि ॥ २० ॥
दयालौ तु कृपालुः स्यात् कृपारुरनुकम्पने ।
कारुण्यं करुणा हिंस्रे हिंसीरोऽपि, निबर्हणे ॥ २१ ॥
विशारणं विशरणं निर्वासन-प्रवासने ।
उद्वासनं, वधार्हे तु शैर्षच्छेदिकसंयुतः ॥ २२ ॥
शीर्षच्छेद्यो, मृते प्रेत-परेतौ, तदहेऽर्पणे[2] ।
तदर्थं चोर्ध्वदेहिकमौर्ध्वदेहिकमित्यपि ॥ २३ ॥
ऊर्ध्वदैहिकमप्यग्न्याधाने तु मृतदाहगे[3] ।
चिति-चित्या-चिताः प्रोक्ताः,ऋजौ तु प्राञ्जलोऽञ्जसः॥२४॥
अनृजौ तु शठः शण्ठो, धूर्ते व्यंशक-व्यंसकौ ।
शठ-शण्ठौ च षण्ढेऽपि, जालिके मायि-मायिकौ ॥२५॥

---

१ ह्रस्वदीर्घावादी ययोस्तौ इकारान्तौ इट् ईट् चेत्यर्थः । २ अधिकरणे कृत् । ३ मृतदाहं गच्छतीति मृतदाहगस्तस्मिन्, अग्न्याधानविशेषणमिदम् ।

मायावी, दाण्डाजनिको दण्डाजनिक इत्यपि ।
मायायां शठता-शाठ्ये, व्याजे लक्ष्यं तु लक्षयुक् ॥२६॥
संख्यायामपि, पिशुने मत्सरो मत्सरी खलः ।
प्रखलः खुल्लकः क्षुल्लः क्षुद्रकः क्षुद्रसंयुतः ॥ २७ ॥
कौलीने वादिको जाते जातो जातात्परो मतः ।
तस्करे चोरटश्चोर-चौरौ पाटच्चरान्वितः ॥ २८ ॥
पटच्चरश्चौरकर्म चौर्यं चोरिका स्तेनवत् ।
स्तेयं स्तैन्यं, हृतधने लोप्त्रं लोत्रं च लोद्रकम् ॥२९॥
मन्दे त्वलस आलस्यश्चतुरे दक्ष-दक्षिणौ ।
उष्णकोष्णौ, दातरि तु स्यादुदारोऽनुदारयुक् ॥ ३० ॥
बहुप्रदे स्थूललक्षः स्थूललक्ष्योऽपि यान्तिमः ।
दानेंहतिरंहितिश्च प्रादेशन-प्रदेशने ॥ ३१ ॥
निर्वापणं निर्वपणं, याचके तु वनीपकः ।
वनीयक-वनवकौ, प्रार्थनायां तु याचना ॥ ३२ ॥
याञ्चैषणाऽध्येषणापि भवितरि भविष्णुयुक् ।
भूष्णुर्भविष्यति भवी भाव्यथो स्यात् प्रसारिणि ॥३३॥
विसारी च विसृमरो विसृत्वरयुतो मतः ।
लज्जाशीले तु लज्जालुर्लज्जूः स्यात्, क्षमिता क्षमी ॥३४॥
क्षन्ता सहिष्णुः सहने, ईर्ष्यालुः कुहने स्मृतः ।
ईर्ष्युश्च, क्रोधने क्रोधी, बुभुक्षायां तु रोचकः ॥३५॥

१ यकारान्त इत्यर्थः । २ ईर्ष्यावति ।

रुचिः क्षुधा-क्षुधौ, तृष्णक् तृषिते तृष्णकोऽपि च ।
क्षुदसहे क्षुधारुः स्यात् क्षुधालुः, शीतकाऽसहे ॥ ३६ ॥
शीतारुश्च सशीतालुः, पिपासायां तृषा-तृषौ ।
तृष्णा-तर्षौ च, लिप्सायां त्रयोऽन्या अपि, भक्षके॥३७॥
आशितश्चाशिरो, भक्ते कुरुः कूरं च दग्धिका ।
भिस्साटा भिस्सटा भिस्सा, दधिसर्वरसाग्रके ॥३८॥
दधिमण्डं मण्डमपि, भक्तमण्डे तु प्रौङ्स्रवः ।
निःप्रात् स्रावश्च, श्राणायां विलेपी च विलेपिका ॥३९॥
विलेपनी विलेप्याऽपि काथिका कथिकाऽपि च ।
तरलं तरला, सूपे सूदोऽप्यथ तिलान्नके ॥ ४० ॥
कृसर-त्रिसरौ पुंस्त्री, पिष्टके पूप-पूपकौ ।
पूपिकायां पौलि-पौल्यौ पूलिका पोलिकापि च ॥४१॥
पूपली चेपत्पके त्वभ्यूपाऽभ्योपाऽभ्युपास्त्रयः ।
निष्ठानोऽस्त्री तेमने स्यात्, सठः पत्रफलादिके ॥४२॥
शाकं साकं हरितके, करम्भो दधिसक्तुषु ।
करम्बोऽपि, घार्तिके तु पूरः स्याद् घृत-पिष्टतः ॥४३॥
घृतवरोऽवसेकिमे वटको वटसंयुतः ।
स्नेहभृष्टतण्डुलेषु भरुजी भरुजापि च ॥ ४४ ॥

---

१ तृडादयस्त्रय शब्दा लब्धुमिच्छायामपीत्यर्थं । २ प्रस्रव, आस्रवश्च । ३ निःप्रशब्दाभ्यां पर स्रावशब्द, निस्राव प्रस्रावावितीति यावत् । ४ दधि प्रधानेषु सक्तुष्वित्यर्थं । ५ घृतपूर, पिष्टपूर इत्यर्थं । ६ स्नेहैर्घृतादिभिः सह भृष्टेषु भर्जितेषु तण्डुलेषु ।

मर्मराले पर्पटश्चपटः, पृथुके [1]चेः पुटः ।
चिपिटश्चिपिटिका शर्करायामुपला सिता ॥ ४५ ॥
सितोपला मधुधूलौ खण्डो वर्गद्वितीयखः ।
फाणिते स्यात्तु मत्स्याण्डी मत्स्यण्डिश्च मत्स्यण्ड्यपि॥४६॥
मत्स्यण्डी [2]खण्डतो योज्या शर्करा सर्करापि च ।
शिखरण्यां रसाला स्याद् रसिता मार्जितायुता ॥४७॥
मर्जिता, मुद्गादिरसे यूयूषास्त्रिषु जुषयुक् ।
दुग्धे गव्यं गोरसश्च रसोत्तमरसे समे ॥ ४८ ॥
क्षीरस्य विकृतौ कूर्चिः कूर्चीका कूचिकान्विता ।
कूर्चिकापि किलाटी स्यात् किलाटा च किलाटयुक्॥४९॥
द्रप्स-द्रप्स्ये दध्न्यघने, हविष्य-हविषी घृते ।
रसायन-गोरसौ द्वौ घोले, तक्रे त्वरिष्टयुक् ॥ ५० ॥
रिष्टमौदश्वितौदश्वित्के संस्कृत उदश्विति ।
पिच्छिले विजलं प्रोक्तं विजिलं विज्वलं विजम् ॥५१॥
विजेविलं विजिपिलमारनाले तु काञ्चिकम् ।
काञ्जिकं च सुवीराऽम्लं सौवीरं [3]चाभितः पुतम् ॥५२॥
कुल्मापाभिपुतं चैव कुल्मापं [4]चार्धराद्धके ।
मापादौ तु कुल्मापः स्यात् कुल्मासश्चाप्युपस्करे ॥५३॥
दन्त्य-तालव्य-मूर्द्धन्यमध्यः स्याद् द्रप्वारकः ।
तिन्तिडीक-तान्तिडीके चुके पक्षण्यपि स्मृते ॥५४॥

---

१ चिपुट इत्यर्थः । २ खण्डशर्करा, खण्डसर्करा । ३ अभिषुतम् ।
४ अर्धपक्वे मापादाविवस्य विशेषणमिदम् ।

राजिकायामासुरी स्यादसुरी च [1]क्षुधा-क्षताल् ।
परोऽभिजननः शब्दो योज्यते शब्दवेदिभिः ॥ ५५ ॥
कुस्तुम्बुरु[2]र्वार्ध्युकारस्तस्मिन् धान्यं च धान्यकम् ।
धन्या धन्याकं धान्याकं धानेयक-धनीयके ॥ ५६ ॥
धनकोऽथ कोलके स्याद् मरीचं मरिचं तथा ।
ऊपणं ह्युपणं विश्वा शुण्ठी शुण्ठिश्च, पिप्पली ॥५७॥
उपणा स्यादूपणापि, [3]कृष्णा च कृष्णतण्डुला ।
गजपिप्पल्यां वशिरो वसिरः, सर्वग्रन्थके ॥ ५८ ॥
ग्रन्थकं शिरोऽनादन्तः, क्लीं सान्तं चटकाशिरः ।
[4]व्योपे त्रेः कटु-कटुके, अजाजी जीर-जीरकौ ॥ ५९ ॥
जीरणो जरणः कणः जीरकः कृष्णजीरके ।
सुषवी दन्त्य-मूर्धन्य-तालव्यान्तर्गता पृथुः ॥ ६० ॥
पृथ्वी उत्कुञ्चिका चोपकुञ्चिकाप्यथ हिङ्गुनि ।
वाल्हीकं वाल्हिकं, जग्धौ खादनं खदनं घसिः ॥६१॥
निघसोऽपि विप्वाणाऽवप्वाणौ जमन-जेमने ।
ग्रासे गुडेरक-गुडौ गुडेरोऽपि गडोलयुक् ॥ ६२ ॥
गण्डोलः कवलोपेतः कवकः, सुहिते पुनः ।
आघ्राता-ऽऽघ्राणकौ, मुक्तस्तृप्ते फेला च फेलियुक् ॥६३॥
मांसाशिनि शाप्वलः स्याच्छौप्कलः शाप्कलिस्तथा ।

---

१ क्षुधाक्षतशब्दाभ्यां परोऽभिजननशब्दः क्षुधाभिजननः क्षताभिजनन- इति । २ वार्धिप्रमिताः, चत्वार इत्यर्थः । ३ तिक्तपिप्पली । ४ शुण्ठिमरीच- पिप्पलीनां युगपद्वाचकौ त्रिशब्दात्परौ कटु-कटुकशब्दौ ।

मौष्कुलिर्मौष्कुलो, लिप्सौ लोलुपो लोलुभोऽपि च ॥६४॥
लोलोऽपि गर्धनो गृध्नु-गृध्नौ चेहेह ईहने ।
कामश्च कामना, धृष्टो धृष्णुः स्याद् धृष्णजा सह॥६५॥
शुभंयुः शुभसंयुक्ते शुभंयश्चाप्यहंकृति ।
अहंयोऽहंयुसंयुक्तः, कामुके कामि-कामिनौ ॥६६॥
कामनः कमनः कम्रः कमरः कमितापि च ।
कामयिताऽभिक-भीकावन्तर्दुर्विपरो मनाः ॥ ६७ ॥
विचेतस्यभिशस्ते तु स्यादक्षारित-क्षारितौ ।
तिरस्कारे परीभावः पैरापर्यभितो भवः ॥ ६८ ॥
न्यक्कारः सनिकारः स्यात्, जागरूके तु जागरी ।
जागरिता, जागरणे जागर्या जागरस्तथा ॥ ६९ ॥
जागरा जाग्रिया, शङ्की संशयालुर्भवेदयम् ।
सांशयिको, दक्षिणार्हे दक्षिण्यो दक्षिणीयकः ॥ ७० ॥
दण्डिते दाप्यतः प्रोक्तो दायितोऽपि तथोच्यते ।
अर्च्ये प्रतीक्ष्यो निर्योपि, पूजिते त्वपचायितः ॥ ७१ ॥
अपचितोऽथार्हणायां पूजा पूज्याऽथ पीनके ।
बहुलो बहलः स्थूर-स्थूलौ पीवा सपीवरः ॥ ७२ ॥
मांसलांसलौ निर्दिग्धे, कृशे शात-शितौ स्मृतौ ।
तीक्ष्णेऽप्येतौ, बृहत्कुक्षौ तुन्दी तुन्दिक-तुन्दिलौ ॥७३॥
तुन्दिभोऽप्युदरिकश्चोदरिलोदरिणौ समौ ।

---

१ अन्तर्मनाः, दुर्मनाः, विमनाः । २ परामवः, परिभवः, अभिभवः ।

अनासिके विग्र-विखू विग्रोऽपि, नतनासिके ॥ ७४ ॥
अवाद् भ्रट-टीट-नाटा नाशायां तन्नतावपि ।
खरनासे खरणसः खरणाः, खुरसदृग्नसि ॥ ७५ ॥
खुरणाः स्यात् खुरणसः, श्रोणे पङ्गुः सपङ्गुलः ।
स्यात् खल्वाटे तु खलति-खलतावल्पकायके ॥७६॥
पृश्नि-पृष्णी गडुले तु न्युब्ज-कुब्जौ, कुहस्तके ।
कुणि-कूणी, ह्रस्वकरपादे ग्वर्वो निखर्वयुक् ॥७७॥
ह्रस्वशाखे वामनश्च वामा नान्तो, छिन्नमके ।
वण्डो दन्त्योष्ठ्यवादिः स्यादल्पमेढ्रेऽपि, खञ्जके ॥७८॥
खोड-खोरौ च खोटोऽपि, पोगण्डो विकलाङ्गके ।
अपोगण्डोऽप्यूर्ध्वजानावूर्ध्वज्ञोर्ध्वज्ञकौ समौ ॥ ७९ ॥
विलजानौ प्रज्ञुः स्यात् प्रज्ञोऽपि, युतजानुके ।
संज्ञु-संज्ञौ च सर्वत्र जञसंयोग उच्यते ॥ ८० ॥
वलियुक्ते वलिनः स्याद् वलिभः, शस्तकेशके ।
केशवः केशिकः केशी, तुण्डिलो वृद्धनाभिके ॥८१॥
तुण्डिभस्तुन्दिलोऽभ्यान्ताऽभ्यमितौ ग्लान-ग्लास्नुकौ ।
व्याधिते, कच्छुरे तु स्यात्पामनः पामरस्तथा ॥८२॥
सातिसारेऽतिसारक्यतीसारकी, कफान्विते ।
श्लेष्मणः श्लेष्मलः, क्लिन्ननेत्रे तद्वति पिल्लयुक् ॥८३॥
चिल्लश्चुल्लोऽपि, मूर्ते तु मूर्च्छालो मूर्च्छितोऽपि च।

१ अवभ्रट, अवटीट, अवनाट इति।

पित्ते पलाग्निः पललज्वरोऽथ खेटयुक् खटः ॥ ८४ ॥
वलासो दन्त्य-तालव्यप्रान्तकः कथितो बुधैः।
कफे, व्याधौ रोग-रुजौ रुजाऽप्यमय आमकः ॥ ८५ ॥
अमः, क्षये राजयक्ष्मा यक्ष्मा जक्ष्मापि नान्तकः।
जक्ष्म-यक्ष्मावदन्तौ द्वौ, क्षवे क्षुत क्षुतमप्यथ ॥ ८६ ॥
क्षवथौ काशः कासोऽपि, खसे पामा तु पामया।
कच्छूः कच्छुः स्त्रियां सर्वे, खर्ज्वी कण्डूयनं मतम् ॥८७॥
कण्डूः कण्डूति-कण्डूये, व्रणे रुपो रुपा सह।
ईर्मोऽस्त्रियामीर्मं नान्तं, गण्डे विस्फोट-स्फोटकौ ॥८८॥
पिटकः पिटका तद्वत्पिटकं च, किलासके।
सिध्म-सिध्मे, कुष्ठभेदे दद्रुर्दद्रूश्च दद्रुयुक् ॥ ८९ ॥
दद्रूर्दद्रूश्च, कोठके मण्डलकं च मण्डलम्।
हृल्लासे हिक्का हेक्कापि, पीनसे स्यादपीनसः ॥ ९० ॥
आपीनसः प्रतिश्यायः प्रतिश्या, श्वयथौ पुनः।
शोफ-शोथौ, छर्दने तु च्छर्दिश्छर्दी प्रच्छर्दिका ॥९१॥
वमनं वमि-वमथू, कुरण्डस्त्वण्डवर्धने।
कुरण्डोऽपि, प्रमेहे तु मेहोऽपि च, चिकित्सके ॥ ९२ ॥
आयुर्वेद्यायुर्वेदिको भिषग्-भिषज-भिष्णजाः।
जायौ भेषज-भैषज्ये उपचारश्चिकित्सने ॥ ९३ ॥
उपचर्यापि, सत्कृत्यालंकृतस्वकनीदये।
कूकुदः कूपदश्चाऽऽपदापदे विपदा विपद् ॥ ९४ ॥
विपत्तौ, कृच्छ्रवच्ये तु समौ दृडाभ-दृडभौ।

समर्धुकस्तु वरदे स्यात् समर्धक इत्यपि ॥ ९५ ॥
सदस्ये तु पारिषद्य-पार्षद्यावथ संसदि ।
परिषत्-पर्षदौ तुल्ये समज्या च समाजयुक् ॥ ९६ ॥
आस्थानमास्था, दैवज्ञे नैमित्तिको निमित्तवित् ।
नैमित्तोऽपि च, मौहूर्तो मौहूर्तिकेऽथ लेखके ॥ ९७ ॥
लिपिकरो लिविकरोऽक्षरन्यासे लिपिर्लिविः ।
मषी-मस्यौ मलिनाऽम्बु, कितवे त्रितयं स्मृतम् ॥९८॥
धार्तो धूर्तोऽक्षधूर्तश्च, दुरोदर-दरोदरे ।
द्यूतेऽथाऽक्षे पाशकः स्यात् प्रासकः शारितः फलम्॥९९॥
फलकोऽष्टापदे शारिः शारः खेलनिकोच्यते ।
व्यालग्राह्यहितुण्डिक आहितुण्डिक इत्यपि ॥ १०० ॥
मनोजवस्ताततुल्ये मनोजवसकोऽपि च ।
क्षेमंकरो रिष्टतात्यरिष्टताती तथाऽऽस्तिके ॥ १०१ ॥
श्राद्ध-श्रद्धालू च, सहे प्रभविष्णुः प्रभूष्णुयुक् ।
शक्त-शक्तावसामर्थ्यजीवके चानवस्थिते ॥ १०२ ॥
चत्वारोऽमी पराः कर्णात् टिरिटिरि-ष्टिरेष्टिरा ।
चुरुचुरु-श्चुरुचुरा, शिथिलः शिथिरः श्लथे ॥ १०३ ॥
स्थित ऊर्ध्वदमश्चोर्ध्वो निर्वकारो वकारवान् ।
ऊर्ध्वदमस्तद्भवे तु ऊर्ध्वाद् दमिक दामिकौ ॥१०४॥
ऊर्ध्वदमिकोऽप्यध्वगे तु स्यादध्वन्योऽध्वनीनवत् ।
गन्तु-गान्तू पथिकश्च पान्थः, शम्बल-सम्बले ॥ १०५ ॥

१ वकाररहितस्तत्सहितश्च ऊर्ध्व, ऊर्ध्वश्चेत्यर्थः ।

पाथेये, जङ्घाकरे तु जङ्घाकरिक जाङ्घिकौ ।
त्वरिते जवी च जवनः सहायेऽप्यनुतश्चरः ॥ १०६ ॥
अनुगाम्यनुगश्चापि सेवायां स्यादुपासना ।
उपास्त्युपेता चोपास्या परेश्चैषणमेषणा ॥ १०७ ॥
पत्तौ पदाति-पादातौ पादातिक-पदातिकौ ।
पदकः पदगः पद्गः पादात्रिक-पदाजिकौ ॥ १०८ ॥
प्रष्ठे सरोऽग्रेऽग्र-पुरः-परतो गम-गामि-गाः ।
पुरस्तः, आवेशिके तु स्तः प्राघूर्णक-प्राघुणौ ॥१०९॥
अतिथ्योऽतिथिरातिथ्य आङ्परौ गान्तु-गन्तुकौ ।
आवेशिक आतिथेय्यातिथेयातिथ्यनिःस्वनाः ॥११०॥
ग्रामे भवे तु ग्रामीण-ग्रामीणौ ग्राम्य इत्यपि ।
ग्रामेयकश्च, लोके तु जनो जनपदस्तथा ॥ १११ ॥
देवलोके देवविशा देवविद् वाऽभिजातके ।
जात्याभिजौ कुलीनश्च कुल्य-कौलेयकौ समौ ॥११२॥
महाकुलीनसहितौ माहाकुल-महाकुलौ ।
गोत्रोऽन्वयोऽन्ववायश्च संतानः संततिस्तथा ॥ ११३ ॥
स्त्रियां महेला महिला मेहला च महेलिका ।
वामिन्वामा जोषा योषा स्याद् योषिदपि योषिता॥११४॥
स्याद् मत्तकासिनी मत्तगामिन्यां मत्तकाशिनी ।
स्त्र्यलङ्कारे कुट्टमितं ह्युकारं, कन्यका कनी ॥११५॥
कुमार्यां, मध्यमवयःस्त्रियां स्यात् तरुणी तथा ।
तलुनी, युवतिश्चोक्ता युवत्याद्यवयःस्त्रियाम् ॥११६॥

सुवासिनी स्ववासिनी वधूटी वध्वटीति च ।
चिरिण्टी स्याच्चिरण्टी च चरिण्टी सचरण्टिका ॥११७॥
पत्न्यां सधर्मिणी सहधर्मिणीगृहिणीगृहाः ।
कलत्रं कडत्रं दारः[1] पुंसि वा भूम्नि दारया ॥ ११८ ॥
जनिर्जनी कुटुम्बिन्यां स्यात् पुरन्धिः पुरन्ध्र्यपि ।
स्नुषायां तु वधूयुक्ता वधूटी च जनिर्जनी ॥ ११९ ॥
कुलस्त्रियां तु कुलतो बालिका पालिकाऽपि च ।
कान्तायां प्रेयसी प्रेष्ठा पटकार-ठकारभाक् ॥ १२० ॥
प्रिया, कान्ते प्रियः प्रेयान् प्रेष्ठष्ट-ठद्वयान्वितः ।
वरो वरयितोद्वाहे विवाहे यम-यामकौ ॥ १२१ ॥
उपात्, जायापत्योस्तु जम्पती दम्पती स्मृतौ ।
द्वित्वे, जस्पती दस्पती प्रायो वेदे प्रयोजितौ ॥ १२२ ॥
जित्वरीवाचकौ पूर्वविकल्पादावुदाहृतौ ।
हरणे तु सुदायः स्याद् दायो युतक-यौतकौ ॥ १२३ ॥
यौतुकः, परगेहस्था लायचा शिल्पजीविनी ।
सैरन्ध्री चापि सेरन्ध्र्यथावरोधनप्रेष्यिका ॥ १२४ ॥
असिक्निका स्यादसिक्नी, दूत्यां दूतिरपि स्मृता ।
प्राज्ञी प्रज्ञा प्रजानत्यामाचार्यानी नृयोगके ॥ १२५ ॥
आचार्या, मातुलानी च मातुल्यपि तथा मता ।
उपाध्यायान्युपाध्यायी, क्षत्रियाणी स्वतो[2] भवेत् ॥१२६॥

---

१ दारः पुंलिङ्गः, बहुवचनान्तः, एकवचनान्तश्चेत्यर्थः । २ भवयोगं विनेत्यर्थः ।

क्षत्रिया स्यादुपाध्याय्युपाध्यायाऽऽर्याणिका पुनः ।
आर्या पुनर्भ्वा दिधिषूर्दिधीषुरपि तद्भवे ॥ १२७ ॥
दिधिषुर्दिधिषूर्विप्रे त्वग्रतो दिधिषुर्मतः ।
दिधिषूरप्यसत्यां तु वर्षणी घर्षणीति च ॥ १२८ ॥
पांशुला पांसुलाऽथ स्यात् पतिः पत्नी च जीवतः ।
पतिवत्न्यां, निर्वीरा च वीरा पति-सुतोज्झिता ॥१२९॥
भिक्षुकी भिक्षुणी मुण्डा श्रमणा श्रवणाऽपि च ।
गणिकायां वेश्या वेष्या पण्याङ्गना पणाङ्गना ॥१३०॥
कुट्टन्यां शम्भली दन्त्य-तालव्यादिर्मता बुधैः ।
कुम्भदास्यां पोटा वोटाऽवस्त्रनार्यां तु नग्निका ॥१३१॥
नग्ना कोटवी कोट्टवी, ऋतुमत्यां तु पुष्पिता ।
पुष्पवती चाविरवी निष्पुष्पायां तु निष्कला ॥१३२॥
निष्कल्यपि च स्त्रीधर्मे आर्तवं ऋतुसंयुतम् ।
रजः सान्तं रजोऽदन्तो ना गुणेऽप्यथ मैथुने ॥१३३॥
सुरतं स्याद् रति-रते पशोर्धर्म-क्रिये स्मृते ।
जभनं यभनं, गर्भवत्यां गुर्वी च गुर्विणी ॥ १३४ ॥
प्रसूतायां विजाताख्या प्रजाताप्यथ भ्रूणके ।
वृषसानो वर्षसानो गरभो गर्भ इत्यपि ॥ १३५ ॥
दोहदं दौहृदं श्रद्धा, पुत्र्यां तु स्यात् स्तनन्धयी ।
स्तनन्धया सूनुः सुतापत्ये, पुत्रेऽपि तोककम् ॥१३६॥
तुगपत्ये, भ्रातृपुत्रे भ्रातृव्यो भ्रात्रीयोऽपि च ।
पुत्रपुत्रे पौत्रस्तस्य पुत्रापत्ये पुनः स्मृतः ॥ १३७ ॥

पौत्रायण एवं पुनर्भूनानान्द्रो दुहितृवत ।
पौनर्भव-पौनर्भवायणौ, नानान्द्र इत्यपि ॥ १३८ ॥
नानान्द्रायणो, दौहित्रो दौहित्रायणकस्तथा ।
पैत्र्यां नप्ता भवेद् नप्त्री स्यात् पितृष्वसुरात्मजे ॥१३९॥
पितृष्वसेयवत्पैतृष्वस्रीयो, जननीस्वसुः ।
पुत्रे तु मातृष्वस्रीयस्तद्वन्मातृष्वसेयकः ॥ ॥१४० ॥
दास्याः सुते तु दासेय-दासेरौ च, नटीसुते ।
नाटेय-नाटेरौ, पुत्रे बन्धक्या बान्धकेयवत् ॥ १४१ ॥
बान्धकिनेयश्च, कौलटेरः स्यात् कौलटेयवत् ।
भिक्षुसत्याः सुते कौलटेय-कौलटिनेयकौ ॥ १४२ ॥
स्वजाते त्वौरसौरस्यौ, भवेद् गोलश्च गोलकः।
मृते पत्यौ जारजोऽथ भ्रातरि स्यात्सहोदरः ॥ १४३ ॥
समानोदर्य-सोदर्य-सोदराः, ज्येष्ठभ्रातरि ।
अग्रजोऽग्रियाऽग्रिमकौ स्यात् कनीयांश्च कन्यसः ॥१४४॥
यविष्ठोऽपि यवीयांश्च कनिष्ठे सोदरे समाः ।
ज्येष्ठ-कनिष्ठ-यविष्ठास्त्रिकवर्गेद्वितीयकाः ॥ १४५ ॥
स्यालस्तालव्य-दन्त्यादिः पत्न्या भ्रातरि कथ्यते ।
देवृ-देवर-देवानः स्युः पत्युरनुजे, स्वसा ॥ १४६ ॥
जानिर्यानिः कुलस्त्री च भग्नी स्याद् भगिन्यन्विता ।
पत्युः स्वसरि ननन्दा ननान्दा नन्दनीत्यपि ॥१४७॥
पत्नीकनिष्ठभगिन्यां श्याली शाली च, खेलने ।
परिहासः परीहासः कुर्दनं कूर्दनं समौ ॥ १४८ ॥

किलः केलिश्च जनके बप्पो वप्रश्च तातयुक् ।
ततो जनयिता तद्वज्जनित्रोऽपि च, मातरि ॥१४९॥
अम्बाऽप्यम्बा जनयित्री जनित्री जननीयुता ।
जानी, पित्रोः स्मृतौ माता-पितरौ, मातरात्परौ ॥१५०॥
पितरः पितृशब्दश्च, ज्ञातौ स्वः स्वजनस्तथा ।
बान्धवो बन्धुरात्मीये स्व-स्वकीये, नपुंसके ॥ १५१ ॥
पण्डु-पाण्डौ शण्ठ-शण्ढौ तृतीयाप्रकृतिस्तथा ।
तृतीयप्रकृतिर्देहे कलेवरं कडेवरम् ॥ १५२ ॥
तनूः स्यात्तनु-तनुपी घनस्तद्वच्च भूघनः ।
गात्रं गान्त्रं मूर्तिमच्च मूर्तिः स्यात्, कुणपे शवः॥१५३॥
शवः सान्तं भवेत् पण्ढे, मूर्ध्नि मस्तक-मस्तिके ।
शिरः सान्तं स्मृतं क्लीबे शिरोऽदन्तो मतो नरि ॥१५४॥
चिकुरश्चिहुरः केशे ललाटस्याऽलके पुनः ।
भ्रमरकः स्याद् भ्रमरालको वेणिः प्रवेणियुक् ॥ १५५ ॥
केशन्यासे काकपक्षे शिखण्डक-शिखाण्डिकौ ।
वक्रस्त्रिपु च्छन्दस्यपि, वान्ते पण्ढे भषद् मसद्॥१५६॥
आमाशयस्थाने च, जघनेऽपि तुण्डि-तुण्डकौ ।
घनं घनोत्तमं भाले स्त्वलीकमलिकं तथा ॥ १५७ ॥
कर्णे श्रवणं श्रुतिवत् श्रवः श्रोत्रं च श्रौत्रकम् ।
नेत्रेऽक्ष्यऽक्ष्णं दृशि-दृशे दृग् लोचन-विलोचने ॥१५८॥
कनीनिकायां तारा स्यात् तारकाऽप्यर्धवीक्षणे ।
काक्षः कटाक्षो नेत्रस्य मीले मेष-मिषौ नितः ॥१५९॥

कालभेदेऽपि भ्रूविकारे भ्र-भ्रु-भ्रू-भृतः कुटिः ।
भ्रूमध्ये कूर्च-कूपे कूर्प नक्रे नस्नया नसा ॥ १६० ॥
नासा नस्या नासिका च नाशिका घ्राणमाघ्रया ।
घ्रा, दन्तवस्त्रे ओष्ठः स्यात् त्रिकवर्गद्वितीयवान् ॥१६१॥
ओष्ठप्रान्ते सृक्क नान्तं क्लीबं सृक्कमदन्तकम् ।
सृक्कणी सृक्कणिङ्यन्तेदन्ते सृक्कि नपुंसके ॥ १६२ ॥
इदन्तमेकैर्वेद्वन्द्वं कयुग्ममपरैः स्मृतम् ।
सृक्कशब्देऽथ हन्वग्रसन्धौ स्याच्चिबुकं चिबुः ॥१६३॥
दंष्ट्रिकायां दाढिका स्याद् द्राढिका खादने पुनः ।
रदनो रदयुग्दंश-दशनौ मल्ल-मल्लकौ ॥ १६४ ॥
जिह्वायां रसना दन्त्य-तालव्यान्तर्गता रसा ।
रसमातृका रसा च रसिका रसनं तथा ॥ १६५ ॥
गले कण्ठः कण्ठी कण्ठं शब्द-समीपयोरपि ।
अंसे तु स्कन्धः स्कधश्च सान्तं क्लीबमुरोंसयोः ॥१६६॥
सन्धौ तु जत्रु पण्ढे स्यात् तकार-रेफयोगवत् ।
प्रवेष्टो दोर्दोषा बाहुर्बाहा बाहो भुजो भुजा ॥ १६७ ॥
भुजामध्ये कपोणिः स्यात् कफोणी च कफोणियुक् ।
कफणिः कफणी तद्वत्कुर्परः कूर्परोऽपि च ॥ १६८ ॥
प्रकोष्ठे वर्गद्वितीयः स्यात् कलाचिः कलाचिका ।
हस्ते करः करिर्हस्तमूले तु मणिबन्धवत् ॥ १६९ ॥
मणिः स्यात्करशाखायामङ्गुरी चाङ्गुरिस्तथा ।
अङ्गुलोऽङ्गुलिरङ्गुल्यां तर्जन्यां तु प्रदेशिनी ॥ १७० ॥

प्रदेशिनी प्रदेशिका, ज्येष्ठाङ्गुल्यां तु मध्यमा ।
मध्या, ज्येष्ठा-कनिष्ठे द्वे टवर्गद्वितीयान्विते ॥ १७१ ॥
पुनर्नव-पुनर्भवौ करजे नखरस्त्रिषु ।
नखोऽस्त्री तर्जन्यायत्तेऽङ्गुष्ठे त्वथ प्रदेशवत् ॥ १७२ ॥
प्रादेशोऽप्यायताङ्गुलौ हस्ते स्यात् प्रतलस्तलः ।
तालिका-तालौ चपेटश्चर्पटश्चपटोऽपि च ॥ १७३ ॥
तद्द्वये योजिते सिंहतलः संहतलस्तथा ।
तताङ्गुष्ठमध्याङ्गुलिमाने तालस्तलोऽपि च ॥ १७४ ॥
वितस्ति-खड्गमुष्टयोश्च, कुञ्चिताङ्गुलिके करे ।
प्रसृतः प्रसृतिश्चापि गण्डूषे चलुकश्चलुः ॥ १७५ ॥
चुलुको, निष्कनिष्ठे स्याद् हस्त आर्तिररत्नियुक् ।
तिर्यक्प्रसारितबाह्वोर्व्यायामो व्याम-व्यामनी ॥१७६॥
वियामः, पृष्ठवंशे तु रीढको रीढयुग् मतः ।
पृष्ठं वर्गद्वितीयात्तमुत्सङ्गेऽङ्को नपुंसके ॥ १७७ ॥
सान्तमङ्कोऽप्यदन्तो नाऽथोरोजोरसिजौ स्तने ।
कुच-कूचौ, जठरे तु स्यात् पिचण्डः पिचिण्डयुक्॥१७८॥
तुन्दं तुन्दिः कुक्ष-कुक्षी, यक्नि कालेय-कालके ।
कालखण्डं कालखञ्जं, गुल्मे प्लीहा प्लिहा तथा ॥१७९॥
नान्तौ, प्लीहा चात्रन्तोऽपि, मध्ये मध्यम इत्यपि ।
विलग्नावलग्नौ सर्वे पुंक्लीबाः, रसनापदे ॥ १८० ॥
कटीरं च कटि-कटी-कटाः श्रोणी च श्रोणियुक् ।
वलित्रयसमाहारे त्रिवलिस्त्रिवली तथा ॥ १८१ ॥

त्रिकपार्श्वगर्तयोस्तु कुकुन्दरे कुकुन्दुरे ।
युतौ स्फिचौ स्फिजौ चान्तौ जान्तौ, स्यात्स्मरमन्दिरे॥१८२॥
योनिर्योनी च, पुंश्चिह्ने शेपः शेफश्च सान्तगे ।
शेप-शेफौ च शेवश्च त्रयोऽदन्ता बुधैः स्मृताः ॥१८३॥
लाङ्गूलं शङ्कु लङ्गूलं, मुष्क आण्डाण्डकौ नरि ।
अण्डं पेलं पेलकोऽप्यथोरुरूरूश्च सक्थनि ॥ १८४ ॥
जङ्घायां तु टङ्क-टङ्गौ खनित्रेऽपि च तौ मतौ ।
पादग्रन्थौ कुल्फ-गुल्फौ घुटिको घुण्ट-घुण्टकौ ॥१८५॥
घुटः सर्वेऽपि पुंल्लिगाः, चरणे चलनः क्रमः ।
क्रमणः पाद-पदौ पात् पत्-पदे अंह्रिरङ्घ्रियुक्॥१८६॥
तिलके कालकस्तद्वत् तिलकालक इत्यपि ।
जडुलो जटुलो, मांसे पलं पललमामिषम् ॥१८७॥
अमिषं चार्द्रमांसे तु भवेदर्पशमर्पिशम् ।
मुख्यमांसे बुक्का नान्तं त्रिषु बुक्कस्त्रिषु स्मृतः ॥१८८॥
बुक्काग्रमांसाग्रमांसे वृक्कः स्यात्पुंस्त्रियोर्वसा ।
मेदः सान्तं मेदोऽदन्तो मस्तिष्को मस्तुलुङ्गकः ॥१८९॥
मस्तकस्नेहे गोदोऽस्त्री करोटं शिरसोऽस्थनि ।
करोटीवत् करोटिश्च भकालं च भगालयुक् ॥१९०॥
पृष्ठहड्डे कशेरुका कशारुकाऽस्थिसंभवे ।
मज्जा नन्तो द्वयोर्मज्जाऽऽबन्तः स्त्री रेत्र-रेतसी ॥१९१॥
बल-बल्ये च वीर्ये द्वे लोम रोम तनूरुहे ।
तनुरुहं, चर्म चर्म त्वक् त्वचं चोचमित्यपि ॥१९२॥

असृग्धरा सृग्धरा च कर्पिते लेख्यचर्मणि ।
काडित्रं सकटित्रं च, स्नायौ वसस्नया स्नसा ॥१९३ ॥
स्नावा नान्तो, धमन्यां तु धमनिर्नाडि-नाडकौ ।
नाडी शिरा सिरा नेत्रमले दूषी सदूषिका ॥ १९४ ॥
दूषीका काणुकं काणूकमाणूकवदाणुकम् ।
घ्राणमले शिङ्घाणक-सिङ्घाणौ, लालिका पुनः॥१९५॥
सृणीका सृणिका गूथो विड्-विषौ शान्त-पान्तगौ ।
वर्चस्क-वर्चसी तुल्ये विष्ठा वर्गद्वितीयभाक् ॥१९६॥
नेपथ्ये वेष-वेशौ द्वावुत्सादनमुद्वर्तने ।
उच्छादनं चापि समालभने चर्चिक्यं मतम् ॥१९७॥
चर्चाऽपि, मण्डने प्रति-परितः कर्म कथ्यते ॥
मार्ष्टो मार्जो मृजा मार्जा मार्जना, स्नान आप्लवः॥१९८॥
आप्लावोऽपि च, गात्रानुलेपन्यां वर्तिरुच्यते ।
वर्ती तथा जोङ्गके स्यादगर्वगुरु वंशकम् ॥ १९९ ॥
वंशिका वंशिकं कृमिजग्धं कृमिजमित्यपि ।
प्रवरं प्रकरं तुल्ये गोशीर्षे हरिचन्दनम् ॥ २०० ॥
हरिश्च, रक्तचन्दने पत्रगं च पतङ्गकम् ।
पत्राङ्गं, सौमनसे तु जातिर्जाती फलं तथा ॥ २०१ ॥
जातीफलं जातिफलं तद्वत्कोशफलं मतम् ।
जातीकोशं जातीकोषं, कर्पूरे स्यात् सिताभ्रकः॥२०२॥
सिताभ्रश्चापि, कस्तूर्यां नाभिवद् मृगनाभिजा ।
मृगनाभिर्मृगमदो मृगः स्याद् मद इत्यपि ॥ २०३ ॥

कुङ्कुमे वरबाह्लीकं वरं वाह्लीक-बाह्लिके ।
कश्मीरजन्म काश्मीरं कश्मीरजमपि स्मृतम् ॥ २०४ ॥
संकोचपिशुनं तद्वत्संकोचं पिशुनं समे ।
वर्णं वर्ण्यं, देवसुमे लवङ्गं लवसंयुतम् ॥ २०५ ॥
कोशफले कक्कोलकं कक्कोलं कोलकं तथा ।
कोलं कोरं च, कालानुसार्ये यापक-जापके ॥ २०६ ॥
कालीयकं कालेयकं कालियं चाऽग्निवल्लभे ।
रालोऽक्ष्यरालः, श्रीवासे धूपः स्याद् वृक-वृक्षतः॥२०७॥
श्रीवेष्टः श्रीपिष्टकश्च, कोटीरे मुकुटोऽस्त्रियाम् ।
मकुटोऽपि किरीटं स्यात् तिरीटं पुष्पदाम तु ॥२०८॥
नान्तः स्त्रीत्रोराबन्तोऽस्मिन् मुण्डमालाभिधे स्मृतम् ।
ललामवल्ललामाऽश्व-प्रधान-ध्वज-लक्ष्मसु ॥ २०९ ॥
पुण्ड्र-वालधि-शृङ्गेषु भूषा-प्रभावयोरपि ।
माल्यं माला, तिलके तमालपत्रं तमालवत् ॥ २१० ॥
शीर्षस्रग्यवतंसः स्याद् वसन्तोत्तंसकौ समौ ।
त्रयोऽमी कर्णपूरेऽपि पत्रावल्यां तु पैत्रतः ॥ २११ ॥
भङ्गि-लेखा-लताङ्गुल्यो वल्लरी मञ्जरीति च ।
वल्लिश्चोत्क्षिप्तकायां तु कर्णान्दूश्च कर्णान्दुयुक् ॥२१२॥
कण्ठभूषायां ग्रैवेयं ग्रैवं ग्रैवेयकं तथा ।
मुक्तास्रग्याहारो हारः स्त्रीत्रोर्यष्ट्यां सरिः सरः॥ २१३॥
सारिकाऽप्येकावल्यां तु कण्ठी कण्ठिकया सह ।

१ पत्रभङ्गि-, पत्रलेखा, पत्रलता, पत्राङ्गुलिभेत्यर्थः ।

कटिके तु पारिहार्यःपरिहार्यश्च कङ्कणम् ॥ २१४ ॥
कङ्कणिश्चोर्मिकायां त्वङ्गुलीयकाङ्गुरीयके ।
मेखलायां सारसनं दन्त्य-तालव्यमध्यगा ॥ २१५ ॥
रसना, काञ्चिः काञ्ची च किङ्किणिः क्षुद्रघण्टिका ।
किङ्कणी कङ्कणीका च कङ्कणी किङ्किणीत्यपि ॥२१६॥
समे मञ्जीर-मन्दारे नूपुरे पादतः परे ।
शीली च नालिका पादाङ्गुलीये पादतः परे ॥२१७॥
पालिका कीलिका, वस्त्रे वसनं वस्त्र-वाससी ।
सिनो निवसनं सत्रं कर्पटं पटमित्यपि ॥ २१८ ॥
पटः पट्याच्छादनं च छादः सिक्-सिचयौ तथा ।
वस्त्राञ्चले वर्ति-वस्ती दुकूलमतसीपटे ॥ २१९ ॥
दुगूलं, कम्बले रल्लो रल्लकोऽथ निवीतके ।
प्रावृतं निवृतं, स्थूलशाटे तालव्य-दन्त्यवान् ॥२२०॥
वरासिः, परिधानस्य ग्रन्थौ नीवी च नीवियुक् ।
चण्डातके चलनकश्चलनश्चलनिका पुनः ॥ २२१ ॥
चोलश्चोली कञ्चुलिका कञ्चूलः कञ्चुकोऽपि च ।
कूर्पासकश्च कूर्पासः कुर्पासः सकुर्पासकः ॥ २२२ ॥
शाटके तु शाटः शाटी, परिधानापराञ्चले ।
कच्छा कच्छाटी च कच्छाटिका, कौपीनके पुनः॥२२३॥
कक्षापटः कक्षापुटः, कर्पटे नक्तको मतः ।
लक्तकः, प्रच्छदपटे उत्तरच्छद उच्यते ॥ २२४ ॥
निचोलको निचुलको निचोलं च निचोल्यपि ।

निचुलोऽवसक्थिकायां स्मृता पर्यस्तिकायुता ॥२२५॥
पर्यस्तिश्चापि पर्यङ्कः पल्यङ्कोऽपि, कुथे पुनः ।
वर्णपरिस्तोम-वर्णौ परिस्तोमवदास्तरः ॥ २२६ ॥
आस्तरणं प्रवेणीयुक् प्रवेणिः प्रतिसीरिका ।
जवनी जवनिकापि यवनी यमनीति च ॥ २२७ ॥
दूष्ये स्थूलं स्थुडमपि, पटकुट्यां तु केणिका ।
केणिः, पल्लवादिकृता शय्या संस्तर-प्रस्तरौ ॥ २२८ ॥
स्रस्तरोऽपि च, तल्पे तु शयनं शयनीयवत् ।
शय्यापि च खट्वायां तु मञ्चवद् मञ्चकः स्मृतः ॥२२९॥
पर्यङ्कोऽपि च पल्यङ्कः, पतद्ग्राह-पतद्ग्रहौ ।
प्रतिग्रह-प्रतिग्राहौ पालेऽथो दर्पणे मतः ॥ २३० ॥
मकुरो मुकुरस्तद्वद् मङ्कुरोऽप्यात्मदर्शवत् ।
आदर्शो, वस्त्रासने त्वासन्दा-सन्द्यौ च सन्दवत् ॥२३१॥
सन्दी भोजन आच्छादे एकोक्त्या चोभयोरपि ।
कशिपुर्दन्त्य-तालव्यमध्यः स्यार्च्छयनासने ॥ २३२ ॥
एकोक्त्योशीरमौशीरं पलङ्कशा पलङ्कषा ।
राक्षा रक्षा च लाक्षापि तद्रसे यावत्रयतः ॥ २३३ ॥
यावको लक्तकालक्तौ, दीपस्तु कज्जलध्वजे ।
प्रदीपो दीपवृक्षश्च तालवृन्ते तु वीजनम् ॥ २३४ ॥
व्यजनं मृगचर्मोते धवित्रं च धुवित्रवत् ।
केशमार्जे कङ्कतिका कङ्कतः काक-कङ्कते ॥ २३५ ॥
कङ्कती, बालक्रीडने गिरिको गिरिवद्गुडः ।

गिरिगुडो गिरियको गिरीयकोऽथ गिन्दुकः ॥ २३६ ॥
गेन्दुकोऽपि कन्दुके द्वौ, पार्थिवे नृपतिर्नृपः ।
भूप-भूपति-भूपालास्तथा मूर्धाभिषिक्तयुक् ॥ २३७ ॥
मूर्द्धावसिक्तो राजा राट् राज्ये महिन-माहिने ।
वसुदेवा वासुदेवा अर्द्धचक्रिषु संमताः ॥ २३८ ॥
तज्ज्येष्ठभ्रातृषु बला बलदेवाः, पृथौ नृपे ।
वेनिर्वैन्यो, भरते तु स्यात् सर्वदमनस्तथा ॥ २३९ ॥
सर्वदमः, सीतापतौ रामः स्याद् रामचन्द्रवत् ।
रामभद्रोऽपि, सौमित्रौ लक्ष्मणो लक्षणान्वितः ॥२४०॥
कैकेयी कैकयी चास्याः पुत्रे तु भरतो मतः ।
भरथोऽप्यथ जानक्यां शीता तालव्य-दन्त्ययुक्॥२४१॥
इन्द्रसुते वालिर्वाली, मारुतो हनुमानिति ।
हनूमान्, भीमशत्रौ किर्मीरः कर्मीर-किर्मिरौ ॥२४२॥
हिडिम्बो डीकारयुक्तोऽर्जुने फल्गुन-फाल्गुनौ ।
बीभत्सो बीभत्सुरपि, पाण्डुसूनुषु पाण्डवाः ॥ २४३ ॥
पाण्डवायनाश्चाऽर्जुनधनौ गाण्डीव-गाण्डिवौ ।
धनुर्मात्रेऽप्ययमू, हाले वाहनः सात-सालुतः ॥ २४४ ॥
सालोऽपि, परिवारे तु परेर्बर्हश्च वर्हणम् ।
आतपत्रे प्रतपत्रं छत्रं छत्रश्च छत्र्यपि ॥ २४५ ॥
रोमगुच्छे चामरं स्याच्चमरश्चामरस्तथा ।
चामरापि, भृङ्गारे लालूराण्डूः, सचिवे पुनः ॥ २४६ ॥
अमात्य आमात्यो मन्त्री मन्त्रिश्च, द्वारपालके ।

प्रतीहारः प्रतिहारो द्वाःस्थो द्वाःस्थितदर्शकः ॥ २४७ ॥
द्वाःस्थितो दर्शकस्तद्वत् द्वाःस्थितादर्श्यऽपि स्मृतः ।
सूदाध्यक्षे पुरोगुः स्यात् तथा पौरोगवोऽपि च ॥२४८॥
सूपकारे सूप-सूदौ स्यादन्तःपुरके पुनः ।
आन्तर्वेश्मिकयुगान्तर्वंशिकोऽन्तःपुरे समौ ॥ २४९ ॥
अवरोधनावरोधौ भवेत्कञ्चुकिके पुनः ।
कञ्चुकी सौविदिल्लश्च सौविदः, स्थपतिस्तथा ॥२५०॥
स्थापत्यः स्थापतीकश्च, रिपौ शत्रुः सशात्रवः ।
अभिमातिरभियातिरारातिश्चाऽप्यरातियुक् ॥ २५१ ॥
ऋष्व-ऋष्वौ घातुकेऽपि द्विषन् द्वेषी च द्विड्युतः ।
परेः पन्थक-पन्थिनौ, सख्यौ सूर्येऽपि चोच्यते ॥२५२॥
मित्त्रशब्दो द्वितकारः, सख्ये सौहार्द-सौहृदे ।
मैत्र्यं मैत्त्री, हेरिके तु चरश्चारोऽवसर्प्यवत् ॥ २५३ ॥
अपसर्पः, सान्त्वजे तु शाम तालव्य-दन्त्ययुक् ।
प्रावृते लञ्चया लञ्च उपदोपप्रदानवत् ॥ २५४ ॥
शौर्ये शौण्डीर्य-शौण्डीरे नय-न्यायौ समञ्जसे ।
भागधेयो भागधेयी भागोऽपि कारवत् करः ॥२५५॥
राजदेयेऽनीकिन्यां तु सेना सैन्यं चमूश्चमुः ।
सैन्यपृष्ठे प्रति-परेर्ग्रहः, केतौ तु केतनम् ॥ २५६ ॥
वैजयन्ती वैजयन्तो जयन्ती च ध्वजो ध्वजिः ।
ध्वाजिश्च ध्वजपरतद्वत्पताकाऽपि पटाकया ॥ २५७॥
ध्वज कूर्चक उच्चूडोच्चूलौ द्वौ चूड-चूलकौ ।

अत्रात्परौ क्रीडार्थे तु रथे पुष्परथो मतः ॥ २५८ ॥
मूर्द्धन्यान्तरथायोगातो, भवेत् कर्णीरथे पुनः ।
डयनं हयनं चाप्यनसि स्याच्छकटस्तथा ॥ २५९ ॥
शकटी शकटं तद्वच्छकटिर्वहसाऽन्वितः ।
वाहसो वृषभेऽप्येतौ, प्रधौ नेमी च नेमिवत् ॥२६०॥
अक्षाग्रकीले त्वण्यानी अखि-सीम्नोरपि स्मृतौ ।
पिण्डिकायां नाभिर्नाभी, कूबरं स्याद् युगन्धरे ॥२६१॥
कुबरं चाधःस्थदारावनुकर्षो नरि नान्तगः ।
अनुकर्षोऽस्त्यदन्तोऽपि धूर्वद् धूर्धुराऽपि च ॥२६२॥
यानमुखेऽथ दोलायां प्रेङ्खः प्रेङ्खा, विनीतकम् ।
वैनीतकं, परम्परावाहने शिबिकादिके ॥२६३॥
याने तु वह्यं वाह्यं च वहनं वाहनं तथा ।
सारथौ वर्ग्यद्वादश ऋकाराकारयुक् त्विह ॥२६४॥
सव्येतः पृष्ठ-ष्ठातारौ दक्षिणात् स्थश्च संस्थवत् ।
रथवति त्रयोऽप्येते रथिको रथिरो रथी ॥२६५॥
अश्ववारे सादिः सादी रथिकेऽप्यमू यन्तरि ।
निषादी सनिषादिश्च, भटे योद्धा सयोधकः ॥२६६॥
तथा भण्डीर-भाण्डीरौ वनेऽपि कथितावमू ।
सेनासमवेते सैन्यः सैनिकोऽपि च, योद्धृषु ॥२६७॥
सहस्रेण साहस्रिणः साहस्रः, प्रतिमुक्तवत् ।
स्यादामुक्तो पिनद्धश्च पिनद्धे, कवचे पुनः ॥ २६८ ॥
मोढिर्मोढा दशनं च दंशस्त्वक्त्रं तनुत्रवत् ।

कञ्चुके वारवाणः स्याद् बाणवारो धियाङ्गवत् ॥२६९॥
अधियाङ्गमधिकाङ्गं सारसने त्रयं स्मृतम् ।
शिरस्त्राणे तु शीर्षण्यं शीर्षकं, शस्त्रजीवनि ॥२७०॥
आयुधीयश्चायुधिको भवेत् परश्वधायुधे ।
पारश्वधिकवत् पारश्वधः, प्रहरणेऽस्त्रवत् ॥२७१॥
शस्त्रं, चापे धन्व धन्वं पुंक्लीबो धनुवद्धनुः ।
धनूः स्त्रियां त्रिणतावत् तृणता धनुषोऽग्रके ॥२७२॥
अटन्यटनिरत्न्योर्न्नी पीडायामपि स्याचलम् ।
तला चाऽपि गोधायां स्याद् वेध्ये लक्ष्यं सलक्षकम् ॥२७३॥
बाणे पृषत्कस्ताल्कान्तः सायकः सायवत्सरः ।
शरः शरुः स्वरुर्भल्लो भल्लिश्चापि कडम्बयुक् ॥२७४॥
कलम्ब इव कादम्बो भेर-भेलावमू तथा ।
भेकेऽपि, कर्तरिः पुङ्खे कर्तरी, शरधौ पुनः ॥२७५॥
तूणी तूणा तूणं तूणस्तूणीरश्च निषङ्गवत् ।
उपासङ्गोऽपि खड्गे तु ऋष्टि-रिष्टी नरस्त्रियोः ॥२७६॥
करवालः करपालः करालिकस्तथोदितः ।
चन्द्रहासश्चन्द्रभासो धारान्तोगो धरोऽपि च ॥२७७॥
प्रत्याकारे कोश-कोषावावरणे फरं स्फरम् ।
स्फरः स्फरकः फरकः फलकं फलमित्यपि ॥२७८॥
खेटकः खेटकं खेटं, कृपाणिका छुरी क्षुरी ।
क्षुरिका सा ऽऽयता पत्रपालः स्यात्पालिकाऽपि च ॥२७९॥
एकधारासौ स्याद्रीली इली च करवालिका ।

करपालिकाऽपि तरवालिकाऽपि च, कुन्तके ॥२८०॥
प्रासस्तालव्य-दन्त्यान्तो, मुद्गरे द्रुघणो घनः।
द्रुघनः, कुठारे पर्शुः परशुश्च परस्वधः ॥ २८१ ॥
पर्श्वधः परश्वधश्च स्वधितिः, परितो घके।
पलिघो दन्त्य-तालव्यौ शर्वली शर्वला युधि ॥२८२॥
लोहदण्डे पट्टिशः स्याद् दन्त्य-तालव्यप्रान्तगः।
अभ्यासभुवि खड्डूरः खलूरश्च खलूरिका ॥ २८३ ॥
प्रस्थाने त्वभिनिर्याणं प्रयाणं खलु हेतवे।
तृणकाष्ठादेः, प्रसृतौ प्रसरणा प्रसारणी ॥ २८४ ॥
प्रसारश्च प्रसरणं, वैरिणः प्रति गच्छति।
अभ्यमित्र्योऽभिमित्रीयोऽभ्यमित्रीणो, बलान्विते ॥२८५॥
उरस्वान् स्यादुरसिलोऽप्यतिबले ऊर्जस्वलः।
ऊर्जस्यूर्जस्वांश्च जिष्णौ जेता च जैत्रवत् ॥२८६॥
जित्वरो, वैतालिके तु सौखशायनिको मतः।
सौख्यशयिकश्चाक्रिके घाण्टिको घाटिकोऽपि च॥२८७॥
मागधो मगधो मङ्खे वैश्यात् क्षत्र्यां भवेऽपि च।
छन्दोजातावुष्णिहोष्णिग् बले शुष्मं तु शुष्मणा ॥२८८॥
ऊर्जे ऊर्जो गूर्जः सान्तं क्लीबं च सहसा सहः।
संग्रामे युद्धं युत् संयत् पुंस्त्रियोश्च संयद्वरः ॥ २८९ ॥
संयतं राटी रालिर्नो समितिः समितः समित्।
समः स्फोट-स्फेट-फेटाः प्रध्मश्च प्रधनं तथा ॥२९०॥
समुदायः समुदयः सांपरायकमित्यपि।

कञ्चुके वारबाणः स्याद् बाणवारो धियाङ्गवत् ॥२६९॥
अधियाङ्गमधिकाङ्गं सारसने त्रयं स्मृतम् ।
शिरस्त्राणे तु शीर्षण्यं शीर्षकं, शस्त्रजीवनि ॥२७०॥
आयुधीयश्चायुधिको भवेत् परश्वधायुधे ।
पारश्वधिकवत् पारश्वधः, प्रहरणेऽस्त्रवत् ॥२७१॥
शस्त्रं, चापे धन्व धन्वं पुंक्लीबो धनुवद्धनुः ।
धनूः स्त्रियां त्रिणतावत् तृणता धनुपोऽग्रके ॥२७२॥
अटन्यटनिरर्त्यार्ती पीडायामपि स्याच्चलम् ।
तला चाऽपि गोधायां स्याद् वेध्ये लक्ष्यं सलक्षकम्॥२७३॥
बाणे पृषत्कस्तात्कान्तः सायकः सायवत्सरः ।
शरः शरुः स्वरुर्भल्लो भल्लिश्चापि कडम्बयुक् ॥२७४॥
कलम्ब इव कादम्बो भेर-भेलावमू तथा ।
भेकेऽपि, कर्तरिः पुङ्खे कर्तरी, शरधौ पुनः ॥२७५॥
तूणी तूणा तूणं तूणस्तूणीरश्च निषङ्गवत् ।
उपासङ्गोऽपि खड्गे तु ऋष्टि-रिष्टी नरस्त्रियोः ॥२७६॥
करवालः करपालः करालिकस्तथोदितः ।
चन्द्रहासश्चन्द्रभासो धारान्तोगो धरोऽपि च ॥२७७॥
प्रत्याकारे कोश-कोषावावरणे फरं स्फरम् ।
स्फरः स्फरकः फरकः फलकं फलमित्यपि ॥२७८॥
खेटकः खेटकं खेटं, कृपाणिका छुरी क्षुरी ।
रिका साऽऽयता पत्रात्पालः स्यात्पालिकाऽपि च॥२७९॥
कधारासौ स्यादीली इली च करवालिका ।

करपालिकाऽपि तरवालिकाऽपि च, कुन्तके ॥२८०॥
प्रासस्तालव्य-दन्त्यान्तो, मुद्गरे द्रुघणो घनः ।
द्रुघनः, कुठारे पर्शुः परशुश्च परस्वधः ॥ २८१ ॥
पर्श्वधः परश्वधश्च स्वधितिः, परितो घके ।
पलिघो दन्त्य-तालव्यौ शर्वली शर्वला युधि ॥२८२॥
लोहदण्डे पट्टिशः स्याद् दन्त्य-तालव्यप्रान्तगः ।
अभ्यासभुवि खड्डरः खलूरश्च खलूरिका ॥ २८३ ॥
प्रस्थाने त्वभिनिर्याणं प्रयाणं खलु हेतवे ।
तृणकाष्ठादेः, प्रसृतौ प्रसरणा प्रसारणी ॥ २८४ ॥
प्रसारश्च प्रसरणं, वैरिणः प्रति गच्छति ।
अभ्यमित्र्योऽभिमित्रीयोऽभ्यमित्रीणो, बलान्विते ॥२८५॥
उरस्वान् स्यादुरसिलोऽप्यतिबले ऊर्जस्वलः ।
ऊर्जस्व्यप्यूर्जस्वांश्च जिष्णौ जेता च जैत्रवत् ॥२८६॥
जित्वरो, वैतालिके तु सौखशायनिको मतः ।
सौख्यशय्यिकश्चाक्रिके घाण्टिको घाटिकोऽपि च॥२८७॥
मागधो मगधो मङ्खे वैश्यात् क्षत्र्यां भवेऽपि च ।
छन्दोजातावुष्णिहोष्णिग् बले शुष्मं तु शुष्मणा ॥२८८॥
ऊर्ज ऊर्जो गूर्जः सान्तं क्लीबं च सहसा सहः ।
संग्रामे युद्धं युत् संयत् पुंस्त्रियोश्च संयद्वरः ॥ २८९ ॥
संयतं राटी राल्लिनो समितिः समितः समित् ।
समः स्फोट-स्फेट-फेटाः प्रधमश्च प्रधनं तथा ॥२९०॥
समुदायः समुदयः सांपरायकमित्यपि ।

सांपरायः संपरायकमग्रगमने मतम् ॥२९१॥
नासीरश्चिपु, धाटौ तु धाट्यवस्कन्द इत्यपि ।
अभ्यवस्कन्दः, सौप्तिके त्ववापात् स्कन्द उच्यते ॥२९२॥
पलायने तु संद्रावः समुत्प्रेभ्यश्च द्राववत् ।
द्रववद् विद्रवो, भग्ने पराजित-जितौ समौ ॥२९३॥
भूतः परापर्यभितो, गुप्तौ तु चार-चारकौ ।
बन्द्यां ग्रहश्च ग्रहकः प्रोपतो ग्रह इष्यते ॥ २९४ ॥
संन्यासिके तापसः स्यात् तपस्व्यपि च सूरतः ।
सूरथोऽपि च दाने द्वौ शान्त-श्रान्तौ जितेन्द्रिये ॥२९५॥
शुद्धकर्मोऽवापाद् दानं महादाने प्रवारणम् ।
वरणं, विप्रे ब्रह्मा स्याद् ब्रह्मणो जाति-जन्म-जाः ॥२९६॥
द्व्यग्राभ्यां, वटौ माणवो माणवकस्तथैव च ।
मौञ्जीबन्धे तूपापाद् नाय-नयावानय इत्यपि ॥२९७॥
अग्नीन्धने स्यादाग्नीध्राग्नीध्यौ स्यातां जटाजटिः ।
सटायां, तपस्विपीठे वृषी वृसी, कमण्डलौ ॥ २९८ ॥
कुण्डं कुण्डी कुण्डिका च, यजमाने तु याजकः ।
यष्टाऽथ सोमपे सोमा सोमात्पीती पीथी च नान्तगौ॥२९९॥
सर्ववेदः-सर्ववेदौ सान्ताऽदन्तौ तु याजके ।
सर्वस्वदक्षणेष्टेश्च, हुतौ होम नपुंसकम् ॥ ३०० ॥
नान्तं, होमो नरेऽदन्तो होत्रं, भूमिः परिष्कृता ।
वेदिर्वेदी च, निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ॥ ३०१ ॥
अरणी समिधि त्वेध एधः सान्तं तथेन्धनम् ।

नान्तादन्ते तु इध्मेध्मे रक्षाभस्मनि क्षारवत् ॥३०२॥
स्रुवे स्रुग्, मखवधे तु शसनं शमनं समे ।
शृतोष्णक्षीरगे दध्नि आमीक्षाऽमिक्षया सह ॥३०३॥
दधिपाज्य-दीर्घीपाज्यौ दधियुक्तघृते मतौ ।
मृषावादिन्यपि चाग्निहोत्रिण्यग्न्याहितो भवेत् ॥ ३०४ ॥
आहिताग्निर्दर्विर्दर्वी घृतलेखनिकोच्यते ।
आचमने तूपस्पर्श उपसंस्पर्शनं तथा ॥ ३०५ ॥
उपसंस्पर्शः, पाठे तु निपाठ-निपठौ समौ ।
स्वाध्याये जपो जाप उपवास उपोषितम् ॥३०६॥
अपवस्त्रमुपवस्त्रमौपवस्त्रोपवस्त्रके ।
वृत्ते चरित्रं चारित्रमाचार-चरणे अपि ॥३०७॥
चरितं, प्राचेतसे तु वाल्मीकिर्वल्मीकयुक् ।
वाल्मीक-वाल्मिकौ तद्वत् कविरादिकविस्तथा ॥३०८॥
मैत्रावरुणिः समैत्रावरुणो, बादरायणे ।
वेदव्यासश्च व्यासः, स्याद् रामः परशुरामवत् ॥३०९॥
जामदग्न्यो, याज्ञवल्क्यो योगेशः सयोगीशकः ।
वशिष्ठो दन्त-तालव्यमध्यो, वर्गद्वितीययुक् ॥ ३१० ॥
गोनर्दीयमुनौ तुल्यौ पतञ्जलि-पतञ्जलौ ।
वररुचौ कात्यायन-कात्यौ, कक्षीवति स्मृतः ॥३११॥
स्फोटायनः स्फौटायनः, पालकाप्ये करेणुभूः ।
कारेणवो मुनिभेदे स्यादत्रिरत्रिणा समम् ॥३१२॥
आपिशलिरापिशालिः कशात् कृत्स्नः सकृत्सकः ।

मृकण्डुवद् मृकण्डश्च, हारीतो हारितोऽपि च ॥३१३॥
पक्षिभेदेऽपि, कुमारः कुमारिलसमन्वितः।
नास्तिके लौकायतिको लोकायतिक इत्यपि ॥३१४॥
बाहुसंभवे राजन्यो राजा च क्षत्र-क्षत्रियौ।
आर्ये विड्-वैश्यौ वेतने वृत्तिर्वार्तापि जीविका ॥३१५॥
ऋते तूञ्छं शिलश्चोञ्छं शिलोञ्छं शिलवत्तथा।
कृषौ प्रमृतमनृतं वाणिज्यं वणिक्कर्मणि ॥३१६॥
वणिज्या वणिज्यं क्रयविक्रयिके तु वाणिजः।
वणिक् प्रापणिकः प्रोक्त आङ्परः पणिकस्तथा ॥३१७॥
पनिकः पतिकश्चैव पदिकः, क्रायके पुनः।
क्रायिको विक्रायके च क्रयिको विक्रयी तथा ॥३१८॥
मूल्ये वक्रयाऽवक्रयौ मूलद्रव्ये तु नीविवत्।
नीवी स्यात्तु विनिमयो नैमेयो निमयोऽपि च ॥३१९॥
वैमेयोऽपि परदाने व्यवहारे पणं पणः।
न्यासार्पणे प्रतिदानं परिदानं, सत्यापने ॥३२०॥
सत्यङ्कारः सत्याकृतिः, संख्येये तु गणेयवत्।
गण्यं, पोते प्रवहणं वहनं वहितं तथा ॥३२१॥
वहित्रं वाहित्थमपि, पोतवाहे नियामकः।
निर्यामोऽपि च वेडायां स्तरणिस्तरणी तरिः ॥३२२॥
तरी स्तरी च काष्ठाम्बुवाहिन्यां द्रुणिवद् द्रुणीः।
द्रोणिर्द्रोणी च नौदण्डे क्षेपणिः क्षेपणीयुता ॥३२३॥
काष्ठकुद्दालेऽभ्रिरभ्री, प्लवे स्यादुडुपो डुवः।

उडूप उडुपस्तरपण्ये तु तर आतरः ॥३२४॥
आतार आतारोऽपि, वृद्ध्याजीवे तु वार्धुपिः ।
वार्धुपिक ऋणे धारोऽस्त्युद्धारे प्रतिभूः पुनः ॥३२५॥
लग्नको लग्नः, पोडशमाषैः करिष-कार्षकौ ।
तुला विंशत्या तु भारो भरश्च शकटीनवत् ॥३२६॥
शाकटोऽपि शलाटश्च शरारोऽपि तुरीयके ।
प्रस्थभागे कुटपः स्यात् कुडवः कुलवोऽपि च ॥३२७॥
द्रोणैः पोडशभिः खारी खारी मानभिदि स्मृता ।
काकनी काकिणी, क्रोशद्वये गव्यूतिरुच्यते ॥३२८॥
गव्यागव्यूते, गोमति गवीश्वर-गवेश्वरौ ।
गोम्याभीरे तु गोपाल-गोपौ स्यातां, कुटुम्बिनि ॥३२९॥
कार्षकः कर्षकस्तद्वत् कृपकः कृपिकोऽपि, च ।
क्षेत्राजीवो भवेत् क्षेत्री सीरे हालो हलं हलः ॥३३०॥
लाङ्गलदण्डे ईषेशे, प्रोक्ता लाङ्गलपद्धतौ ।
शीता तालव्य-दन्त्यादिर्नदीभेदेऽपि लाङ्गले ॥ ३३१ ॥
निरीषे तु कुट-कूटौ कुटकं, कुशिके पुनः ।
कृशिकश्च फलं फालः कुद्दालश्च कुदालवत् ॥३३२॥
गोदारणे प्रवयणे तोत्रं प्रतोद-तोदने ।
आबन्धे तु योत्र-योक्रे कोटीशो लोष्ठभेदने ॥३३३॥
कोटिशः खलवाल्यां तु मेधिर्मेथिश्च शूद्रके ।
पद्य-पज्जौ क्षत्र-वैश्याजातौ माहेष्यवद् मतः ॥३३४॥
महिष्योऽपि शिल्पिनि तु स्युः कारु-कारि-कारवः ।

मृकण्डुवद् मृकण्डश्च, हारीतो हारितोऽपि च ॥३१३॥
पक्षिभेदेऽपि, कुमारः कुमारिलसमन्वितः।
नास्तिके लौकायतिको लोकायतिक इत्यपि ॥३१४॥
बाहुसंभवे राजन्यो राजा च क्षत्र-क्षत्रियौ।
आर्ये विड्-वैश्यौ वेतने वृत्तिर्वार्तापि जीविका ॥३१५॥
ऋते तून्छं शिलश्चोञ्छं शिलोञ्छं शिलवत्तथा।
कृषौ प्रमृतमनृतं वाणिज्यं वणिक्कर्मणि ॥३१६॥
वणिज्या वणिज्यं क्रयविक्रयिके तु वाणिजः।
वणिक् प्रापणिकः प्रोक्त आङ्परा: पणिकस्तथा ॥३१७॥
पनिकः पतिकश्चैव पदिकः, क्रायके पुनः।
क्रायिको विक्रायके च क्रयिको विक्रयी तथा ॥३१८॥
मूल्ये यक्रयाऽवक्रयौ मूलद्रव्ये तु नीविवत्।
नीवी स्यात्तु विनिमयो नैमेयो निमयोऽपि च ॥३१९॥
वैमेयोऽपि परदाने व्यवहारे पणं पणः।
न्यासार्पणे प्रतिदानं परिदानं, सत्यापने ॥३२०॥
सत्यङ्कारः सत्याकृतिः, संख्येये तु गणेयवत्।
गण्यं, पोते प्रवहणं वहनं वहितं तथा ॥३२१॥
वहित्रं वाहित्थमपि, पोतवाहे नियामकः।
निर्यामोऽपि च वेडायां स्तरणिस्तरणी तरिः ॥३२२॥
तरी स्तरी च काष्ठाम्बुवाहिन्यां द्रुणिवद् द्रुणीः।
द्रोणिर्द्रोणी च नौदण्डे क्षेपणिः क्षेपणीयुता ॥३२३॥
काष्ठकुद्दालेऽभ्रिरभ्री, प्लवे स्यादुडुवो डुवः।

श्वेदनिका श्वेदनश्च कन्दौ स्याद् नापिते क्षुरी ॥३४६॥
क्षौरिको भण्डिवाही च भाण्डिकस्तस्य भाण्डके ।
क्षुरः खुरो, मायाकारे प्रातिहारिक उच्यते ॥३४७॥
प्रतिहारो, मायायां तु शाम्बरी साम्बरी तथा ।
इन्द्रजाले तु कुहुकं कुहकं तद्वदाहतम् ॥ ३४८ ॥
विनोदे स्यात् कुतुकं कौतुकं च कुतूहलम् ।
कौतूहलं, पापर्द्धौ तु मृगव्यं मृगया मृगः ॥ ३४९ ॥
आच्छोदनं चद्वितीयथद्वितीयकसंयुतम् ।
आखेटक आखेटश्च, रज्जौ तन्त्री च तन्त्रिवत् ॥३५०॥
वटारक-वटारौ द्वौ वटस्त्रिपु तु दोरवत् ।
दवरश्च तन्तुगुणे, दाशो दासश्च धीवरे ॥ ३५१ ॥
दाशी दासी धीवरी स्याच्छिलाजतु च चेट्यपि ।
मत्स्यबन्धने बडिशं वलिशं च, वधास्पदे ॥६५२॥
शूना तालव्य-दन्त्यादिः, पामरः प्रामरोऽपि च ।
क्षुल्लकः खुल्लकस्तद्वद्, निपादे तु श्वपाकवत् ॥ ३५३ ॥
पाकश्चण्डाल-चाण्डालौ वुक्कसः पुक्कसस्तथा ।
पुल्कसोऽन्तावसायी चान्तेवास्यपि पुलिन्दवत् ॥३५४॥
पुलिन्द्रोऽपि, शबरे तु पत्रशबर उच्यते ।
वरटो वारटोऽप्युक्त इडीडौ म्लेच्छजातिके ॥ ३५५ ॥

इति श्रीवादीन्द्रश्रीसाधुकीर्त्युपाध्यायमिश्राणां शिष्यलेशेन वाचनाचार्यश्रीसाधुसुन्दरगणिना विरचितायां शब्दरत्नाकरनाम-शब्दभेदनाममालायां मानवकाण्डस्तृतीयः ।



ध्वजो ध्वजी कल्पपाले मद्ये कपिश-कापिशे ॥३३५॥
कापिशायनं माध्वीकं मार्द्वीकं च परिश्रुता ।
परिस्रुद् दन्त्य-तालव्यमध्यातालव्य-दन्त्यभृत् ॥३३६॥
सुरा, मदिरा मद्वरी मदना मद्य-बीजके ।
नग्नहूर्नग्नहुर्मद्यसन्धाने, भिष-वासवौ ॥३३७॥
पानपात्रे तु, तर्पणा ऽनुतर्षौ मद्यपाशने ।
उपदंशश्चावदंशः स्यात् तेजसावर्तनीमुखा ॥३३८॥
मूषा मूषी शाणे शाणा शाणिर्निकषवत्कषः ।
कृपाण्यां कर्तरिः प्रोक्ता कर्तरी चापि, सेव्रनी ॥३३९॥
सूचिः सूची सूचि-सूत्रे द्वे पिप्पलक-पिप्पले ।
कर्तनसाधने तर्कुस्तर्कुट्यपि च सीवनम् ॥ ३४० ॥
सेवनं च स्यूतौ, स्यूते तु प्रसेवश्च प्रसेवकः ।
स्योनं स्यात्तन्तुवाये तु तन्त्रवायः कुविन्दवत् ॥३४१॥
कुपिन्दोऽपि सूत्रवेष्टे त्रसरस्तसरोऽपि च ।
वानदण्डे वेम वेमा तन्तौ स्यात् सूत्रतन्तुवत् ॥३४२॥
सूत्रः सूत्रं सूत्र्यपि स्यादुपानहि तु पादुका ।
पादूः पन्नद्धापि पादाङ्गुलींथी रथी तथा ॥३४३॥
पीठी त्राणं रक्षणं च पदात् त्रायतापि च ।
वरत्रायां नध्री वध्री वार्ध्री वर्ध्रापि वर्ध्रवत् ॥३४४॥
पिण्याके खलिः खलोऽस्त्री स्यात्तक्षिण्यां तु वासित्रत् ।
वासी तूलिका खीपी केपिका कान्दविके पुनः ॥३४५॥
भक्ष्यकारो भक्ष्यकार आदितालव्य-दन्त्यभृत् ।

वस्तकं स्याद्, विड-विटौ पाक्ये, टङ्कस्तु टङ्कणे ॥१०॥
टङ्कनः पाचनकश्च पाचनस्तुग्घिका पुनः ।
खर्जिः स्यात् खर्जिका देशे, विशयी विषयी तथा ॥११॥
विषयः पुंस्त्रियोर्नीवृदुपोपातस्तु वर्तनम् ।
जाङ्गलो निर्जले देशे जाङ्गलो जडभूयसि ॥ १२ ॥
नडकीयो नड्वलश्च नडांश्च, बहुशर्करे ।
शर्करा शर्करिलोऽपि शर्करावांश्च शार्करः ॥ १३ ॥
सिकता-वालुकाप्राये स्याद् सिकतिल-सैकतौ ।
सिकतावान्, साखायः शाखिनेडाहाल-डाहलाः ॥१४॥
डहालाश्चेदयश्चैद्याः, साल्वाः सल्वा अपि स्मृताः ।
वाह्लिका-वाह्लि-वाह्लीकाः, पाञ्चालाः स्युः पञ्चालवत्॥१५
कुङ्कुणः कौङ्कणोऽप्युक्तो, द्रविडो द्रमिडोऽपि च ।
ग्रामे तु वसथः सं-न्यु-प-प्रति-परितः परः ॥ १६ ॥
पल्लि-पल्ल्यौ गृह-गृहसमूह-स्थानकेष्वपि ।
सीम-सिमौ क्षेत्र-सीम-गोचर-भू-ह्येष्वपि ॥ १७ ॥
मर्यादा घट आघाटः स्थविः स्थिविश्च सीसया ।
सीमः सीमा त्रिपु नान्तो मालं ग्रामान्तराटविः ॥१८॥
मालकोऽपि भवेत्क्षेत्रे वप्रो वप्यश्च संमतः ।
शाकक्षेत्रे स्तुतं शाकं शाकटं शाकशाकिनम् ॥ १९ ॥
अणुक्षेत्रे चाणवीनमणव्यमपि, भङ्गवत् ।
भाङ्गीनं च भङ्गाक्षेत्रे, उमाक्षेत्रे तथोम्यवत् ॥ २० ॥

---

१. उपवर्तनम्, उपावर्तन चेत्यर्थ ।

# अथ चतुर्थः काण्डः ।



धात्र्यां भू-भूमि-भूम्यः स्युः पृथवी पृथिवी पृथा ।
धरित्री धरयित्री वसुधा सुधा वसुन्धरा ॥ १ ॥
विश्वा विश्वम्भरा क्षोणिः क्षोणी तद्वद् महिर्मही ।
जगतिर्जगत्युर्वरोर्विरूर्वी ग्मा क्ष्मा क्षमा ॥ २ ॥
अवन्यवनिर्धरणी धरणिर्धारया धरा ।
केलिश्च केलिनी ख्याता महास्थल्यम्बरस्थली ॥ ३ ॥
दीर्घोदय ईडेलेराश्च त्विडीडौ डान्तगौ मतौ ।
अदन्ताविड ईडश्च देवभिद्यपि तौ स्मृतौ ॥ ४ ॥
इडेले सर्ग-नाडी-गो-बुध-स्त्री-वाक्ष्वपीरिते ।
द्यावाभूम्योस्तु रोदस्यौ रोदसी रोदसी तथा ॥ ५ ॥
आद्यो ङ्यन्त इदन्तोऽन्यस्तृतीयः सान्तपण्ढगः ।
द्यावापृथिव्यौ च दिवस्पृथिव्यौ च तथोदिते ॥ ६॥
दिवःपृथिव्यौ च, क्षारभूम्यामुपरमूपरम् ।
इरिणवदीरिणं, भूः कृत्रिमोच्चा स्थला स्थलम् ॥ ७ ॥
मृद् मृत्तिकाऽपि, सा शस्ता मृत्सा मृत्स्नाऽपि, खानिका।
लवणस्य रुमा नान्ता रुमाऽऽबन्तापि कथ्यते ॥ ८ ॥
वशिरो वसिरश्चाऽपि सामुद्रलवणे मतौ ।
सैन्धवे दन्त-ताल्व्यादिमं सीतशिवं स्मृतम् ॥ ९ ॥
माणिमन्थं माणिबन्धं रौमके, वसुकं वसु ।

वस्तकं स्याद्, विड-विटौ पाक्ये, टङ्कस्तु टङ्कणे ॥१०॥
टङ्कनः पाचनकश्च पाचनस्तुग्घिका पुनः ।
खर्जिः स्यात् खर्जिका देशे, विशयी विषयी तथा ॥११॥
विषयः पुंस्त्रियोर्नीवृदुपोपातस्तु वर्तनम् ।
जाङ्गलो निर्जले देशे जाङ्गलो जडभूयसि ॥ १२ ॥
नडकीयो नड्वलश्च नडांश्च, बहुशर्करे ।
शर्करा शर्करिलोऽपि शर्करावांश्च शार्करः ॥ १३ ॥
सिकता-वालुकाप्राये स्याद् सिकतिल-सैकतौ ।
सिकतावान्, साखायः शाखिनेडाहाल-डाहलाः ॥१४॥
डहालाश्चेदयश्चैद्याः, साल्वाः सल्वा अपि स्मृताः ।
वाह्लिका-वाह्लि-वाह्लीकाः, पाञ्चालाः स्युः पञ्चालवत्॥१५॥
कुङ्कणः कौङ्कणोऽप्युक्तो, द्रविडो द्रमिडोऽपि च ।
ग्रामे तु वसथः मं-न्यु-प-प्रति-परितः परः ॥ १६ ॥
पल्लि-पल्ल्यौ गृह-गृहसमूह-स्थानकेष्वपि ।
सीम-सिमौ क्षेत्र-सीम-गोचर-भू-हयेष्वपि ॥ १७ ॥
मर्यादा घट आघाटः स्थविः स्थिविश्च सीमया ।
सीमः सीमा त्रिपु नान्तो मालं ग्रामान्तराटविः ॥१८॥
मालकोऽपि भवेत्क्षेत्रे वप्रो वप्यश्च संमतः ।
शाकक्षेत्रे स्मृतं शाकं शाकटं शाकशाकिनम् ॥ १९ ॥
अणुक्षेत्रे चाणवीनमणव्यमपि, भङ्गवत् ।
भाङ्गीनं च भङ्गाक्षेत्रे, उमाक्षेत्रे तथोम्यवत् ॥ २० ॥

१ उपवर्तनम्, उपावर्तनं चेत्यर्थः ।

औमीनं च, यवक्षेत्रे यव्यं यवक्यं यावकम् ।
मापाक्षेत्रे तु मापीणं माप्यं च, तृतीयाकृते ॥ २१ ॥
शम्बाकृतं सम्बाकृतं, त्वापादौ द्रौण-द्रौणिके ।
द्रोणस्य, खलधाने तु खलस्त्रिपु च, रेणुके ॥ २२ ॥
धूलि-धूल्यौ पांशु-पांसू रजो ना सान्तपण् रजः ।
दलौ लोष्टो लेष्टुर्लोष्टुर्नाकौ कुलक-कूलकौ ॥ २३ ॥
नगरे नगरी द्रङ्ग-द्राङ्गौ पत्तन-पट्टने ।
पुरस्त्रिपु पूः पुरिश्च, कन्याकुब्जं तु गाधिपूः ॥ २४ ॥
कन्यकुब्जं, शिवपुर्यां कासिस्तालव्य-दन्त्यभृत् ।
वराणसी वाराणसी वाणारसी वराणसिः ॥ २५ ॥
कासी काश्यथाऽयोध्यायां कोसलोत्तरकोशला ।
कर्णपुर्यां चम्पा चण्या, मथुरा मधुरान्विता ॥ २६ ॥
मधूपघ्ने, गजाह्वये हस्तिनी हस्तिनायुतात् ।
हास्तिनात् पुरं स्तम्भपूः, लिप्तं स्यात्ताम-दामतः ॥२७॥
तामलिप्ती, विदर्भायां कुडिनी कुण्डिनात् पुरम् ।
द्वारकाऽनिकाररेफा, सालस्तालव्य-दन्त्यभृत् ॥ २८ ॥
वरणे प्राकारः पारक् जान्तः क्षौमे तु अट्टवत् ।
अट्टालकयुतोट्टालो, वृत्तौ वाटी च वाटिका ॥२९॥
वाटो वाटं वाटिरिव प्राचीनं च प्रचीरवत् ।
मार्गे तालव्य-दन्त्यादिः सरणिः सरणी पथः ॥ ३० ॥
पन्थाः पन्थान-पथी वर्त्मनिर्वर्त्म वर्तनिः ।
वर्तनी पदवी तद्वत् पदविः, सत्पथे पुनः ॥ ३१ ॥

स्वतितः पन्थाः, अपथमपन्था गूढवर्त्मनि ।
भ्रूमध्ये तु ह्युकाराद्या दन्त-तालव्यपूर्वगा ॥ ३२ ॥
शुरुङ्गा सन्धिला सन्धिः, स्थाने तु पदमास्पदम् ।
पितृ-प्रेतादन-गृहे, धिष्ण्ये सदन-सादने ॥ ३३ ॥
गृहं गेहं धाम धामं मन्दिरं मन्दिरा कुटिः ।
कुटः कुटयोकः सान्तं पण् पुंस्योकोऽदन्त उच्यते ॥३४॥
सद्मं सात्रं वस्त्यं पस्त्यं निवासा-ऽऽवास-वासकाः ।
आवसथो वसितश्चोदवसितं न्याङ्युग् लयः ॥ ३५ ॥
निकाय्य-निकायौ स्यातां स्यादागारमगारवत् ।
चतुःशाले चातुःसाली जवनं यवनं समः ॥ ३६ ॥
यमनं चोपकार्य्योवदुपकार्योपकारिका ।
प्रसादनः प्रसादोऽपि देव-भूपगृहे समौ ॥ ३७ ॥
मठस्त्रिष्वावसथ्यश्चावसथः स्तूप-तूपकौ ।
आयतनविशेषेऽथो मृतचैत्ये तु चैत्रवत् ॥ ३८ ॥
चित्यं च, हविर्गेहे तु होत्रं होत्रीयवत्स्मृता ।
आथर्वणे शान्तिगृहं शान्तीगृहं, तृणालये ॥ ३९ ॥
कुटी कुटि-कुडी तुल्ये, सूतका सूतिका परम् ।
गृहं त्वरिष्टे, कारूणां कर्मशालाऽनुवासनम् ॥ ४० ॥
अन्वासनमावेशनं, भिल्लसद्मानि पक्कणः ।
द्विककारोऽस्त्रियां, हट्टेऽट्टोऽस्त्रियां विपणिः स्त्रियाम् ॥४१॥
विपणी चाऽऽपणो, वेश्याश्रये वेशः सवेपकः ।
भित्तौ स्याद्भित्तिका कुड्य-कुट्ये अत्र तृतीयकौ ॥ ४२ ॥

तृतीयतुर्यवर्गस्थो, कुड्येऽन्तर्निहितास्थनि ।
एडुकैडूके औडूपं, वितर्दी वेदि-वेदिके ॥ ४३ ॥
प्राङ्गणा-ऽङ्गणे त्वजिरेऽङ्गनं स्याद्दलजे पुनः ।
द्वाःस्त्री द्वारं च वारोपि, परिघेऽर्गलमर्गला ॥ ४४ ॥
अर्गलो तथा वर्गेल्यर्गलिका, द्वारयन्त्रके ।
ताडकं तालकं चास्योद्घाटयन्त्रे तु तालिका ॥४५॥
प्रतिताल्यपि, कपाट्यां कपाटं च कपाटकः ।
कवाटः कवाटी तुल्यौ कुवाटोऽरर-ऽररी ॥ ४६ ॥
अररी, स्तम्भाद्यधःस्थदारौ प्रोक्ते शिली-शिले ।
गोपानसिर्गोपानसी वक्रे वलभिच्छादने ॥ ४७ ॥
दारौ, देहल्यामुम्बरोदुम्बरोऽम्बुरकास्त्रयः ।
बहिर्द्वारप्रकोष्ठे तु प्रघाण-प्रघणौ समौ ॥ ४८ ॥
प्रघानः प्रघनोऽलिन्दे आलिन्दः, पटलस्त्रिपु ।
पटं छदिः छादिः सान्ते स्कीलालेऽथेन्द्रकोशके ॥४९॥
तमङ्गस्तवङ्गश्छदिराधारे वलभीभवे ।
वलभिर्वडभी तद्वद्वडभिश्चूडया समम् ॥ ५० ॥
चूला मूलापि, गवाक्षे जालं जालकमित्यपि ।
कुसूलस्तालव्यदन्त्यमध्यः स्याद्धनकोष्ठके ॥ ५१ ॥
अधिरोहिण्यां निःश्रेणिः निर्विसर्गोऽविसर्गयुक् ।
निःश्रेणी, कोणोऽश्रिरस्रः पालिः पाली च पुंस्त्रितः॥५२॥
का-ल्यौ पञ्चाली पाञ्चाली विच्छन्दका-विच्छर्दकाः ।
नन्द्यावर्तप्रभृतिषु, समुद्गे संपुटः पुटः ॥ ५३ ॥

मञ्जूषायां तु मञ्जूषा पेटा-पटिक-पेटकाः ।
पेडा, व्यवहारिकायां तु वर्धनीवद्वर्धनी ॥ ५४ ॥
बहुकरो बहुकरी बहुकरा तयेरिते ।
धूल्यादौ तु समः कार-करावचकरः स्मृतम् ॥ ५५ ॥
खण्डनभाण्डे तु भवेदुदूखलमुलूखलम् ।
उरूखलं, किलिञ्जे तु कटः कटी कटं तथा ॥ ५६ ॥
मुसले मुपलोऽयोग्रमयोनिर्वंशनिर्मिते ।
भाण्डे तु कण्डोलकः स्यात्कण्डोलः पिटकः पिटम् ॥५७॥
तितउः चालनी स्त्रीपण्, सूर्पं तालव्यदन्त्ययुक् ।
प्रस्फोटनेऽन्तिकायां लश्मन्तमश्मन्तकान्वितम् ॥ ५८ ॥
अखन्तकमखन्तं च चुल्लि-चुल्ल्यावुदः परे ।
हानं धानं ध्मानं च, पिठरस्त्रिपुचोखया ॥ ५९ ॥
उखः स्थालं स्थालिः स्थाली कुण्डकुण्डी च कुण्डिवत् ।
कुण्डी कुम्भिः कुम्भी घटे घटी कुटोऽस्त्रियां कुडः ॥६०॥
कलसः कलशः कुम्भस्त्रिष्वङ्गारकपात्रिका ।
हसन्तिका हसन्ती च हसनी चाम्बरीपवत् ॥ ६१ ॥
अम्बारीपं, पिष्टपाकभृत्पृचीपमृजीपवत् ।
दर्व्यां खजा खजाका च खजका खजिकापिच ॥६२॥
दारुहस्तके तु तर्दूस्तर्दूरपि गलन्तिका ।
आडूरालूर्भवेदालुः कर्करीका च कर्करी ॥ ६३ ॥
करकोऽस्त्री लोहकर्णवत्पात्रे कटहः स्मृतः ।
कटाहः कर्परस्तद्वत् खर्परस्त्रितयं त्रिपु ॥ ६४ ॥

अलिञ्जेर तु मणिको मणिर्गर्गर्यो मन्थनिः ।
मन्थनी कलशी तद्वत् कलशिः, क्षुब्धके मथः ॥ ६५ ॥
मथिर्मन्थान-मन्थकौ मथापो मन्थ एव च ।
मन्था विशाख-वैशाखौ खजकी खजका खजा ॥६६॥
खजश्च खजको, मन्थविष्कम्भे कुटरस्तथा ।
कुटकः, शालाजिरे तु दन्त्यतालव्यपूर्वगः ॥ ६७ ॥
सरावो ना दृतिस्तत्र खल्लं खल्लश्च भाण्डभित् ।
ध्रुवका ध्रूवकाऽमत्रे पात्रं पात्री च पात्रकाः ॥ ६८ ॥
तद्विशालं स्थालं स्थाली, शैले तु धर-भूधरौ ।
भूध्रोऽद्रिश्च शाद्रि-सद्री शिखी स्याच्छैखरोपि च ॥६९॥
क्रौञ्चे क्रुङ् तथा कौञ्जोपि, विन्ध्ये मेकल-मेखलौ ।
उज्जयन्ते रैवतको रैवतश्चक्रवालवत् ॥ ७० ॥
चक्रवाडो लोकालोकाचले, मेरुः सुमेरुवत् ।
स्वर्णाद्रावथ कन्दर्या कन्दरा कन्दरं दरिः ॥ ७१ ॥
कन्दरोपि दरो, दर्योः प्रस्थे प्रष्ठोपि सानुयुक् ।
स्नुर्ना तालव्यमूर्धन्यमध्यौ पाषाणयुग् दृषत् ॥७२॥
शिलाशिल्यौ ग्रावाकरे खनी खानी खनिस्तथा ।
निधितडागयोरप्येतौ द्वौ, धातौ तु गैरिकम् ॥ ७३ ॥
गवेरुकं च कस्सटी खटिनी च खटीयुता ।
कठिन्यां ताम्र ऊदम्बमुदुम्बरमुडुम्बरम् ॥ ७४ ॥
औदुम्बरं वरिष्ठं स्यात् त्रिकवर्गद्वितीययुक् ।
वंगे त्रपु त्रपुस्तपुद्वे सान्ते त्रीणि षण्ढके ॥ ७५ ॥.

तारे श्वेतं सितं रूप्यं रूप्पं भीरु सुभीरुकम्।
कनके स्वर्णं सुवर्णं स्याद् महारजतान्वितम् ॥ ७६ ॥
रजतं हेम हेमोऽस्त्री रुक्मं रुग्मं च रुक्मलम्।
शातकुम्भं शातकौम्भं हिरण्यं हिरणं तथा ॥ ७७ ॥
वराटशुक्रयोरप्येतौ स्यातां भर्म-भर्मणी।
शृङ्गी शृङ्गिरलङ्कारसुवर्णेऽथाऽऽरकूटके ॥ ७८ ॥
आरोऽस्त्री रिरी रीरी च कांस्यं स्याद् वङ्ग-शुल्वजे।
कंसं च पञ्चलोहे तु सौराष्ट्रं च सौराष्ट्रकम् ॥ ७९ ॥
पारतः पारदः सूते चलश्च चपलोऽभ्रके।
अभ्रं गिरिजामलं स्याद् गिरिजं चामलं तथा ॥ ८० ॥
शिखिग्रीवे तुच्छाञ्जनतुच्छे पुष्पाञ्जने पुनः।
पौष्पकं पुष्पकं पुष्पं पुष्पकेतुवदाढकी ॥ ८१ ॥
तूबरी तुवरी मोक्ता मृत्तालकं मृतालकम्।
मृत्तिका मृत्स्नया मृत्सा, गन्धाश्मनि सुगन्धकः ॥८२॥
सौगन्धिकः सुगन्धश्च गन्धिको गन्धकोऽपि च।
गोदन्ते हरितालं स्याव् तालमालमलं तथा ॥ ८३ ॥
मनोगुप्तायां नेपाली नैपाली च मनःशिला।
शिला सिन्दूरे शृङ्गारे भवेच्छृङ्गारभूषणम् ॥ ८४ ॥
हंसपादे हिङ्गुलोऽस्त्री हिङ्गुलुः स्यादथाश्मजे।
गिरिजं गैरेयं शैलं शैलेयं च शिलाजतु ॥ ८५ ॥
बोले गोपरसो गोपो रसो गन्धरसान्वितः।
रत्ने मणिश्च माणिक्यं वैडूर्यं वालवायजे ॥ ८६ ॥

वैडूर्यमपीन्द्रनीले महानीलं तथाङ्परौ ।
पनिकः पदिकश्चापीन्द्रकीलेऽपि वज्रके ॥ ८७ ॥
हीरश्च हीरको, राजपट्टे प्रोक्तो विराटजः ।
वैराटोऽपि चन्द्रकान्ते चान्द्रोऽपि, स्फटिके मतम् ॥८८॥
स्फाटिकं च, शुक्तिजे तु मुक्ता मुक्ताफलान्विता ।
मौक्तिकं च मकुतिकं भवेद् मुकुतिकं तथा ॥ ८९ ॥
वणिग्द्रव्येऽपि, पानीये जीवनीयं च जीवनम् ।
नीरं नारं मीरं वा स्त्री-क्लीबयोर्वारि वार्दरे ॥ ९० ॥
उदकोदे दक-दगे कबन्धं बन्ध-मन्धके ।
कमन्धमापः स्त्री भूम्नि आपः सन्त स्युत्सूत्सकौ ॥९१॥
शम्बरं दन्त-तालव्यादिमं स्याच्छवरः शिवम् ।
कूपीटं कुपीटमलं कमलं च शरं सरः ॥९२॥
सन्तं सारं दुमलं च द्रुमलं भुवनं वनम् ।
जलं जडं च सलिरं सरिलं सलिरं तथा ॥९३॥
सरिरं, त्रिपकारं च पिप्पलं, स्यादगाधके ।
अस्थाघमस्ताघा-ऽस्तागे गम्भीरं च गभीरवत् ॥९४॥
निम्ने चलागाधयोश्च, धूमिका धूमरी हिमे ।
धूममहिष्यथाऽवश्याऽवश्यायौ, वारिधौ पुनः ॥९५॥
वार्द्धिर्वारिनिधिरुत्सोत्सू अपांपतिरप्पतिः ।
यादसांपतिश्च यादःपतिश्चाप्यकूपारवत् ॥९६॥
अकूवारः पारापारः पारावारोऽपि कथ्यते ।
अवारपारस्तरङ्गे भङ्गो भङ्गं महत्पथम् ॥९७॥

लहरी लहरिः, फेने डिण्डीरः सडिण्डीरकः।
पिण्डीर-दिण्डीरौ तट्यां तटं तटः प्रतीरवत् ॥९८॥
तीरं रोधोऽदन्तः पुंसि रोधः सान्तं नपुंसके।
जलोज्झितेऽस्मिन् पुलिनं पुरिनं सैकतं तथा ॥९९॥
सिकता, नद्यां ह्रदिनी ह्रादिनी च धुनी धुनिः।
आपगाऽथाप्यपगा श्रोतो दन्त्य-तालव्यगादिमम् ॥१००॥
स्रोतस्विनी स्रोतस्वती स्रोतोवहा स्रवन्तिका।
द्रवन्त्योपधिभेदेऽप्यमू भवेतां च, गोदया ॥१०१॥
गोदावरी, सूर्यात्मजा तापिस्तापी शतद्रुयुक्।
शुतुद्रिः शुतुद्रुरपि शितद्रुः सरयूयुता ॥१०२॥
सरयुः कोसलानद्यां, नदीभेदे तु चन्द्रिका।
चन्द्रभागा चन्द्रभागी भागी चान्द्राश्च भागया ॥१०३॥
वासिष्ठ्यां गोमती तद्वत् गोतमी स्याद् विपाड्युता।
विपाशोक्ता, वैतरणी वैतरणिस्त्वन्तिगा ॥ १०४ ॥
सिप्रा सुप्रापि, स्वतोऽम्भःसरणे श्रोत उच्यते।
दन्त्य-तालव्ययुग् देहसिरास्वपि प्रवाहके ॥ १०५ ॥
वेणिर्वेणीत्त्वक्रं वक्रं पुटभेदेऽम्बुनिर्गमे।
परिवाह-परीवाहौ नाल-नादौ प्रनालिका ॥ १०६ ॥
प्रणालः प्रणालं तोयमार्गे सरणिः सारणी।
कुल्यायां, सिकतायां तु वालुका वालिकापि च ॥१०७॥
बिन्दौ पृपतिः पृषतः पृषत्, पङ्के तु कर्दमः।
दमोऽपि, दीर्घिकायां तु वापिर्वापी च कूपके ॥१०८॥

क्षुद्रे चुरिश्चुरी चुण्ढिश्चुण्ढी च घटीयन्त्रके ।
उद्घाटकमुद्घाटनमुद्घातनमपि स्मृतम् ॥ १०९ ॥
कासारे तु तडागः स्यात् तडाकश्च तटाकवत् ।
सरः-सरस्यौ स्थानकेऽलवालं चालवालयुक् ॥ ११० ॥
आवालोऽस्त्री, उत्स उत्सुः स्रवः प्रस्रवणं झरः ।
झरी झरा निर्झरश्च, वह्नावग्निस्तु पुं-स्त्रियोः ॥ १११ ॥
दमुना दमूना सन्ता वर्ञ्चतिश्चाङ्कतिस्तथा ।
शुष्मा बहिर्बर्हिः शुष्मा नान्तः शुष्मोऽस्त्यदन्तकः॥११२॥
आश्रयाश आशयाश विश्वप्सा नान्तगो मतः ।
विश्वप्सोऽपि, नान्तो दान्तः शन्त्रतोऽपि तनूनपात्॥११३॥
घासिर्घसुरिर्हवनो हविश्च द्वौ वनात्परौ ।
दवो दावो, हेतौ कीला कीलो ज्वालो पि ज्वालया॥११४॥
अर्चिरर्ची सन्तेदन्तावूष्मा नान्तः सहोष्मया ।
बाष्पे,तडिति शम्पा स्यात् सम्पा शम्बा च विद्युता॥११५॥
विद्युत् सौदामिनी सौदामनी सौदाम्निकान्विता ।
सौदाम्नी च सुदाम्नी वा चपला चवला चला ॥११६॥
आकालिकी चाकालिका, वायौ मरुत-मारुतौ ।
मरुत् समीर-समरौ स्मरोऽप्यनलाऽनिलौ ॥ ११७ ॥
जगत्प्राणो-जगत्प्राणौ गन्धाद् वाहि-वाह-वहाः ।
वातिर्वातो भवेत् सारो दन्त्य-तालव्यपूर्वगः ॥११८॥
शबलवर्णेऽपि सरट्-सरडौ टान्त-डान्तगौ ।
लघट् च लघिटिः पविः पवनः पवमानवत् ॥११९॥

वातूलो वातुलो वातसमूहेऽथासहेऽपि च ।
वातविकारस्याऽरण्ये पण्डं शण्डं वनं वनी ॥ १२० ॥
सत्रं तालव्य-दन्त्यादि दवो दावोऽटव्यटविः ।
चुरुम्बः सतुरुम्बश्चारामेऽपोपात्परं वनम् ॥ १२१ ॥
राज्ञामन्तःपुरोद्याने प्रमदा-प्रमदाद् वनम् ।
वृक्षे द्रुमो विद्रुमो द्रुः कुठिः कुण्ठोऽङ्घ्रिपोऽङ्घ्रिपः ॥१२२॥
शालस्तालव्य-दन्त्यादिः शिखी शाख्यगमोऽगवत् ।
पारिन्दश्चापि पालिन्दो गायकेऽपि दलान्विते ॥ १२३ ॥
पर्णलः पर्णिलो वृक्षे स्थाने वृक्षैर्वृतान्तरे ।
निकुञ्ज-कुञ्जौ जरुट-जरुडौ च, वनस्पतौ ॥१२४॥
फलासवृक्षे फलवान् फलिनश्च फली तथा ।
फलपाकावसानायामौषध्यौषधिरोषधी ॥ १२५ ॥
क्षुपो ह्रस्वशिफाशाखे क्षुपको, प्रततिर्लता ।
प्रततिर्व्रतती तद्वद् वल्लि-वल्ल्यौ च वेल्लिवत् ॥१२६॥
प्ररोहे रोहेऽप्यङ्कुराङ्कुरौ शाखा शिखा लता ।
स्कन्धशाखा शाला साला जटा जटिः शिफा शिफः॥१२७॥
मूले वृक्षस्य बुध्नः स्याद् ब्रध्नोऽङ्घ्रिरङ्घ्रिसंयुतः ।
मज्जा नान्तो ना मज्जावन्ता सारेऽथ वल्लिका ॥१२८॥
त्वचस्त्वचा त्वक् च चोचं शल्कं वल्कं च वल्कलम् ।
शकलं वल्के शल्के त्वचेऽपि शल्कं शकलेऽपि ॥१२९॥
कोटरे निष्कुटः प्रोक्तो निष्कहो, वल्लरौ पुनः ।
वल्लरी मञ्जरी मञ्जा मञ्जरिश्चापि, पर्णके ॥ १३० ॥

पत्रं पात्रं पतत्रं च छादनं छदनं छदः ।
सन्तं छदोऽस्त्री चादन्तः, नवेऽस्मिन् किसलं स्मृतम्॥१३१॥
किसलयं द्वयं दन्त्यं, पुष्पे सुमनसः स्त्रियाम् ।
भूम्नि सुमना ऐक्येऽपि प्रसूनं सून-सूनके ॥ १३२ ॥
प्रसूतकं प्रसूतं च प्रफुल्लं फुल्लवत् सुमम् ।
कुसुमं, कलिकायां तु कलिः स्यात्कोर-कोरकौ ॥१३३॥
कुड्मले कुड्मलं तद्वत् कुम्मलं कुमलं तथा ।
मुकुलं मकुरं प्रोक्तं मुकुरं, बकुलद्रुमे ॥ १३४ ॥
कुलालदण्डे कोरको दर्पणेऽपि च कोशवत् ।
कोषो द्वौ च कपे दिव्ये रैवये योनिशिम्बयोः ॥१३५॥
जातीकोशे सिपिधानेऽण्डकोऽपि स्तबके पुनः ।
गुत्सो गुच्छो गुलुत्सुश्च गुलुच्छुः सगुलुच्छकः ॥१३६॥
गुच्छको गुञ्छको गुञ्छो गुलुञ्छोऽस्त्री, रसे पुनः ।
पौष्पे मकरन्दः ख्यातो मकलन्दो मकरन्दवत् ॥१३७॥
प्रबुद्धे प्रफुल्ल-फुल्ले संफुल्लोत्फुल्लके स्फुटम् ।
स्फुटितं सव्याकोशं च व्याकोपं स्यात् फले पुनः॥१३८॥
शस्यं तालव्य-दन्त्यादि वानावाने तु शुष्कके ।
ग्रन्थौ पकः पण्डं सन्तं पसश्च बीजकोशिका ॥१३९॥
शिम्बा सिम्बायुता शिम्बिः शमी शिमिश्च पिप्पली ।
पिप्पलः पिप्परी बोधिः स्याद् बोधिद्रुम इत्यपि ॥१४०॥
स्यादश्वत्थे च, प्लक्षे तु पर्कटी नन्त-ङयन्तगः ।
जटी नन्तो जटी ङ्यन्तो भवेज्जटिरिदन्तकः ॥१४१॥

न्यग्रोधे तु वटो वट्या वटं जन्तुफले पुनः ।
उदुम्बरोडुम्बरौ द्वौ मलयूर्जघनेफला ॥१४२॥
मलयुः, सहकारेऽम्र आम्रोऽपि शिग्रुके स्मृतः ।
दन्त्य-तालव्यादिः शालाञ्जनोऽक्षीव आक्षीववत् ॥१४३॥
पुन्नागे केशरो दन्त्य-तालव्यमध्यः केशवः ।
बकुले केशरस्तद्वत् केसरः सिंहकेसरः ॥१४४॥
मालूरे बिल्वो बिल्वी च, पर्णगुच्छे कुरण्टकः ।
कुरुण्टक-कुरण्डकौ किकरातवदीरितः ॥ १४५ ॥
किंकिराटः, पलाशे तु दन्त्य-तालव्यमध्यगः ।
किंशुकस्तृणराजे तु तलस्तालश्च तद्विदि ॥१४६॥
तालि-ताडी, देवताडे देवताडी खरागरी ।
खरागर्यौ समे प्रोक्ते अगरीवद् गिरागरी ॥१४७॥
मोचायां तु रम्भा रम्भः कदलिः कदलोऽपि च ।
कन्दलस्त्रिपु वारणवुषा बुषा बुसान्विता ॥१४८॥
हयमारे करवीरः कणवीरस्तथा मतः ।
प्रतिहासः प्रतीहासः स्याद् गिरिमल्लिका कुटः ॥१४९॥
कौटजः कुटजः कोटी, तत्फले लिन्द्र-भद्रतः ।
यवं कलिङ्गं कलिङ्ग, वेतसे वेतसी रथः ॥१५०॥
रथाभ्रपुष्पोऽभ्रपुष्पः, कौलौ तु बदरी भवेत् ।
बदरिस्तथा कर्कन्धुः कर्कन्धूः कर्कुन्धुवत् ॥१५१॥
कर्कुन्धूर्घुण्टा घोण्टा च गोपघोण्टातने भवा ।
नीपे कदम्ब-कलम्बौ शालस्तालव्य-दन्त्यवान् ॥१५२॥

सर्जे फेनिले त्वरिष्ठो रिष्ठोऽपि पिचुमन्दवत् ।
पिचुमर्दोऽपि निम्बेऽथ कर्पासे पिचुतूल्युक् ॥ १५३ ॥
पिचुस्तूलः पिचव्यश्च, कृतमाले त्वारग्वधः ।
आर्ग्वधारगवधौ च शम्पाकश्च सम्पाकवत् ॥१५४॥
वृषे वृषक-वृषभावाटरूपोऽटरूपकः ।
अटरुषोऽटरुषक आटरूषो अटाद् रुषः ॥ १५५ ॥
वाशको वाशिका वासा वाशा स्त्रीत्रोः करञ्जवत् ।
करजोऽपि नक्तमाले रक्तमालस्तथेमकौ ॥ १५६ ॥
काकाचिकः काकचिकस्तद्विशेषे तु पूतिकः ।
पूतीकोऽपि महावृक्षे स्नुक् स्नुद् स्नुहिः स्नुही स्नुहा॥१५७॥
गुडो गुडा गुडी वज्रो वज्रा वज्री सिहुण्डवत् ।
सीहुण्डो पराजितायामास्फोटा स्फोतया समम् ॥१५८॥
पारिभद्रे तु मन्दारुर्मन्दारो मन्दरोऽपि च ।
मधुद्रुमे मधूकः स्याद् मधुकश्च मधूलकः ॥ १५९ ॥
मध्वष्ठीलो मधुष्ठीलो मधुश्चापि, पलङ्कषे ।
गुग्गुलो गुग्गुलुः कुम्भं कुम्भोलूश्च कुभोलुवत् ॥१६०॥
उलूखलं च खलकं कुम्भोलूखलकं तथा ।
चारे प्रियालः पियालो राजादन-राजातनौ ॥१६१॥
सन्नकद्रुः सन्नकोद्रुर्धनुष्पटो धनुष्पटौ ।
धनुरुदन्तः क्षीरिण्यां क्षीरिका च राजादनः ॥१६२॥
राजातनो राजन्यां च फलाध्यक्षोऽप्यध्यक्षवत् ।
रथद्रुमे स्यात्तिनिशं तिलिशो नेमि-नेमिनौ ॥१६३॥

नेमी ङ्यतोऽपि नारङ्गे नार्यङ्गस्तापसद्रुमे ।
इङ्गुदी गुदामिङ्गुदः स्याछ्रीपर्ण्यां तु काश्मरी ॥१६४॥
कश्मरीवत् काश्मर्या च काश्मीर्यपि च संमता ।
कम्भारी गम्भारी तुल्ये अम्लीकायां मताम्लिका॥१६५॥
अम्बिलका चाम्बिलकाऽम्लीका तिन्तिडी तिन्तिली तथा।
तिन्तिडीका तिन्तिडिका, दाडिमः शुकवल्लभे ॥१६६॥
दाडिम्बो दालिमोऽपि स्याच्छेलुः श्लेष्मान्तके शलुः ।
लकुचे लिकुचोऽप्युक्तो डहुश्चाडहुरित्यपि ॥ १६७ ॥
बीजके त्वासनः प्रोक्तोऽसनोऽशनवदाशनः ।
पाटला पाटलिः स्त्रीत्रोबर्हुत्वके भवेद् भुजः ॥१६८॥
भूर्जो भुर्जः कर्णिकारे परिव्याधश्च व्याधवत् ।
जलवेतसभेदे स्यादिज्जलो हिज्जलोऽपि च ॥ १६९ ॥
निचुलो निचुरो धात्र्यामामलकी त्रिलिङ्गिका ।
कायस्थावद् वयःस्था च स्याद् भूम्यामलकी पुनः॥१७०॥
ताली तामलकयमली झाटा चाज्झटयान्विता ।
विनुशको नह्यासो विभीतक-त्रिभेदकौ ॥ १७१ ॥
अक्षभया हरीतकी त्रिलिङ्गा स्याद् वयःस्थया ।
कायस्थैतत्फलत्रय्यां त्रिफली त्रिफला फलम् ॥ १७२ ॥
तृफला, गन्धवृक्षे तु वरणो वरुणस्तथा ।
भवेत् तमाले तापिच्छस्तापिञ्छो विन्दुसंयुतः ॥१७३॥
सिन्दुवारे तु निर्गुण्डी निर्गुण्डा च निगुण्ड्यपि ।
सुरस इन्द्रसुरिसोऽप्यथातिक्तके लता ॥ १७४ ॥

माधवीलता माधव्यथोड्रपुष्पे जपा जवा ।
मालत्यां तु जातिर्जाती सुमनाऽऽवन्त-सन्तगा ॥१७५॥
विचकिले मल्लिका च मल्लिः स्याच्छतभीरुका ।
शीतभीरुर्वनजेऽस्फिन्नारफोता स्फोटया समम् ॥ १७६ ॥
शिवमल्ल्यां बक-बुकौ वसूको वसुको वसुः ।
वृक्षरुहायां तु वन्दा वन्दाका च जयन्त्यपि ॥ १७७ ॥
जीवन्ती सुपिणे करमर्दः स्यात् करमन्दवत् ।
कृष्णपाकफलः कृष्णपाकः कृष्णफलात् परः ॥१७८॥
पाकः पाककृष्णफलः पाकाढिफलकृष्णवत् ।
प्रियङ्गौ फलिनीयुक्ता फला जम्बीरपादपे ॥ १७९ ॥
जाम्बीरोऽपि च जम्भीरो जम्भीलो जम्भ-जम्भलौ ।
बीजपूरे पूरकः स्यात् सुपूरकश्च केसरी ॥ १८० ॥
केसराम्लोऽम्लकेसरो मातुलिङ्गश्च लिङ्गवत् ।
मातुलुङ्गोऽपि, ग्रन्थिले करीर-ककरौ समौ ॥ १८१ ॥
करर एरण्डे मण्ड आरण्डः स्यादमण्डवत् ।
उरुबूकश्चोरुबुको व्यडम्बक-व्यडम्बनौ ॥ १८२ ॥
कपिकच्छ्वां तु कण्डूरा कण्डुराण्डाव्यवेः परा ।
शूकशिम्बा शूकशिम्बी विजयायां तु मातुली ॥१८३॥
मातुलानी भृङ्गी भङ्गा धूर्ते धुस्तूर-धूस्तुरौ ।
धूस्तूर-धुस्तुरौ घुस्तुर्धत्तूरो घुत्तुरो रवौ ॥ १८४ ॥
अर्कोऽर्कपर्णो वसुको वसुरा स्फोटयान्विता ।
आस्फोताऽथ दधिफले कपित्थः स्यात्कपिच्छवत्॥१८५॥

लाङ्गली नन्तो ङ्यन्तो नालिकेरी नालिकेरवत् ।
नालिकेलो नालीकेरो नालिकेरिश्च पर्णकः ॥ १८६ ॥
चीर्णोत्कर्जूर-खर्जूरौ वर्षपाकी कपीतनः ।
पीतनकोऽम्नातकश्चाम्रातकः क्रकचच्छदे ॥ १८७ ॥
केतकः केतकी कोविदारे कुद्दालवत् स्मृतः ।
कुदारो, गजप्रियायां शल्लकी सल्लकीति च ॥ १८८ ॥
सिल्लकी ह्लादिनी ह्लादा तन्निर्यासे तु कुन्दुरुः ।
ङ्युकारः, कुन्दः पालक्यां पालङ्कीति च वंशके ॥१८९॥
त्वचिसारः त्वक्सारोऽपि शिंशपाऽगरुशिंशपा ।
अगरुवंशलोचना भवेद् वांशीव वंशजा ॥ १९० ॥
तुकाक्षीरी त्वक्क्षीरी च त्वक्क्षीरं रोचना च गोः ।
गोपित्तरोचना, पूगे गूवाकः स्याद् गुवाकवत् ॥ १९१॥
तद्भेदे चिक्कणं चिक्कं ताम्बूली कथिता बुधैः ।
ताम्बूलवल्ल्यां क्रमुकपर्णचूर्णकसंयुजि ॥ १९२ ॥
तम्बुलं च सताम्बूलं तुम्ब्यां तुम्बः सतुम्बकः ।
तुम्बी तुम्बिरलाबूवदालाबूरप्यलाबु च ॥ १९३ ॥
लाबुका गुञ्जायां काकचिञ्चिका काकणिन्दिका ।
काकनन्तिका, गोस्तन्यां मृद्वीका स्याद् मृद्वीकपा ॥१९४॥
रसा द्राक्षा भ्राक्षा कण्ठ्यां त्रिकण्ट-त्रिककण्टकौ ।
गोक्षुरो गोक्षुरु-क्षुरौ गोखुरो गिरिकर्णिका ॥ १९५ ॥
आस्फोता स्यादास्फोटा च वीरणीमूल आद्दतम् ।
उशीरमुषिरमुशिग् जान्तो लघुलयं लघु ॥ १९६ ॥

लयमृणाला-मृणाले अवदाहेष्टकापथम् ।
इष्टकापथावदाहौ वालके वाल इष्यते ॥ १९७ ॥
ह्रीवेरं हिरिवेरं च दद्रुघ्ने तु प्रपुन्नटः ।
प्रपुन्नाटश्च प्रातुन्नाटकः पद्माट इत्यपि ॥ १९८ ॥
प्रपुन्नाडः प्रपुनाड उरणा-क्षोरणाख्यकौ ।
शिरीषे भण्डी भण्डीरो भण्डिरो भण्डिलोऽपि च ॥१९९॥
जम्बूवृक्षे जम्बुरपि तत्फले जम्बु-जाम्बवे ।
जम्बूः स्त्री स्यादरलौ लरेटुः श्योनाकशोणकौ ॥ २०० ॥
स्योनाकः कुटन्नटवद् नटोऽथ चिरजीवकः ।
जीवको मधुरकश्च मधुरः कूर्चशीर्षके ॥ २०१ ॥
कपीतनो गर्दभाण्डे कपीतः पीतनस्तथा ।
नागकेसरे केसरो नागः स्याद् मदनद्रुमे ॥ २०२ ॥
पिण्डी पिण्डीतकः कटहलद्रौ पनसः स्मृतः ।
फनसः पणसो भल्लातके रुष्वोऽप्यरुष्करः ॥ २०३ ॥
पिच्छिलायां शाल्मलिः स्याच्छल्मलिः शाल्मलोऽपि च ।
प्लीहशत्रौ रोहितको सरोहितक-रोहितौ ॥ २०४ ॥
रोही खदिरे गायत्री नन्तो ऽन्यतश्च कथ्यते ।
पुण्डरीके तु पुण्डर्यं प्रपुण्डरीकमित्यपि ॥ २०५ ॥
कतके कतोऽपि केशहन्त्र्या शमिः शमीति च ।
ह्रस्वा शमीरुः शमीरस्तूते तूदं तुदं तथा ॥ २०६ ॥
मधुयष्ट्यां यष्टिमधु यष्टीमधुकमाहृतम् ।
यष्टिमधुकं त्वक्पत्रे गुडत्वक् त्वक् त्वचं तथा ॥२०७॥

वराङ्गकं वराङ्गं च स्यादेलायां तु निष्कुटिः ।
निष्कुटा स्थूलैलायां तु कथिता त्रिपुटा पुटा ॥२०८॥
कर्कटशृङ्ग्यां शृङ्गी च कृष्णाभेद्यां कटंवरा ।
कटुकी कटुकश्चापि अशोका रोहिणीयुता ॥ २०९ ॥
अशोकरोहिणी दारुहरिद्रायां कालेयकः ।
कालीयको गालवे तु रोध्र-लोध्रौ च सावरः ॥२१०॥
तालव्य-दन्त्यपूर्वः स्यात्, तद्भेदे ङ्यन्त-नान्तगः ।
पट्टी फणिज्जके तु स्याद् मरुबक-मरूबकौ ॥ २११ ॥
रक्ताम्राते कुरुबकः सोकारानुकाररकः ।
महासहायामम्लातो म्लातको म्लान इत्यपि ॥२१२॥
अमिलातकेऽपि दुरालभायां तु यवासकः ।
यवास-यवापौ यासो धन्वयासोऽपि संमतः ॥ २१३ ॥
धन्वयवासको धन्वयासो रोदनी बोधनी ।
मोरटायां मूर्वा मूर्वी स्रवा स्रुवाऽपामार्गके ॥२१४॥
खराद् मञ्जरि-मञ्जर्यौ भार्ग्यां हिञ्जी च फञ्जिका ।
ब्राह्मणी ब्राह्मणाद्या स्याद् यष्टिकाथ किरातकः ॥२१५॥
किरातो हैमे कुष्ठे तु वर्ग्यद्वादशसंयुते ।
वानीरं वानीरजं च व्याप्यमाप्यं च तद्विदि ॥२१६॥
शतरुपा शतारुश्च सन्तोऽथो कटफले पुनः ।
काफलं कट्फलस्तद्वत् केटरः कैटर्यं तथा ॥२१७॥

---

१ उकारसहित', अनुकारश्च रकारो यस्मिन्– कुरवकः, कुरबकश्चेत्यर्थ. ।

अजमोदायां तु मयूरो भवेद् हस्तमयूरकः ।
यवानिका यवानी च यमानिका यमान्यपि ॥२१८॥
झिण्ट्यां सैरेयश्च सैरीयकः सहचरान्वितः ।
सहाचरो नीलझीण्ट्यां बाणो वाणाथ पीतिका ॥२१९॥
कुरबकः कुरुण्टकः सहाचरः सहाच्चरः ।
सहचरी शतपुष्पा सितच्छत्राऽतिच्छत्रका ॥२२०॥
मिशिर्मिशी मिसि-मिस्यौ मधुरा तु मधूरिका ।
सालेयो दन्त्यतालव्यो मिशी मिशिर्मिसी मिसिः ॥२२१॥
मिश्रेया कोकिलाक्षे तु क्षुर इक्षुर इत्यपि ।
शङ्खिन्यां तु चोरपुष्पी चौर्यथो खरकाष्ठिका ॥२२२॥
काष्ठिकापि बलायां स्याद् नागबलायां तु द्वे पुनः ।
गङ्गेष्ठिका गाङ्गेरुका महाबलायां संगता ॥२२३॥
सहदेवी देवसहा हिङ्गुपत्र्यां तु कारवी ।
करवी कवरी तद्वत् कवरी बाष्पिकायुता ॥ २२४ ॥
बाष्पीका पृथु-पृथ्व्यौ च स्याद् मयूरशिखोऽप्यसौ ।
मयूरो लोचतः ख्यातो मस्तको मर्कटोऽपि च ॥ २२५॥
श्यामलतायां गोपे च गोपी गोपालिका तथा ।
गोपवल्ली शारिवावद् भवेदुत्पलशारिवा ॥ २२६ ॥
चोराख्यगन्धद्रव्ये तु गणवद् गणहासकः ।
शुषिरायां नटी-नट्यौ ग्रन्थिपर्णेऽशुकं मतम् ॥ २२७ ॥
शुकबर्हं बर्हिःपुष्पं पुष्पं स्पृक्कौषधौ पुनः ।
कोटीवर्षा कोटिवर्षा कोटिमाला मरुद्युता ॥२२८॥

मरुन्मालाऽप्यथ वृद्धदारके इक्षगन्धया ।
इक्षुगन्धा छागलान्त्री छगली तद्वदान्त्र्यपि ॥२२९॥
दन्त्यां मकूलक-मुकूलौ रक्ताङ्गके पुनः ।
स्यात्कम्पिल्लश्च काम्पिल्लः काम्पिल्योऽपि कम्पीलवत् २३०
रोचनी रेचनी बलभद्रिका त्रायमाणिका ।
त्रायन्ता, रास्नायां रस्या रसना रसनं रसा ॥२३१॥
मांसिगन्धद्रव्ये मिषी मिसिश्च जटिला जटा ।
जनातिगन्धद्रव्येषु स्याजनी जननी जनिः ॥२३२॥
जतूका जतोः का-कार्यौ जतुकृच्चातिविषा पुनः ।
विषी विषा प्रत्युषाभ्यां त्रिवृति त्रिवृता स्मृता ॥२३३॥
त्रिपुटी त्रिपुटा प्रोक्ता रोचनी रेचनीयुता ।
शतवीर्यायां तु शतावरी चेन्दीवरी वरी ॥२३४॥
सहदेव्यां सहदेवः सहदेविश्च कथ्यते ।
मञ्जिष्ठा वर्गद्वितीययुग् भण्डीरी च भण्डिरी ॥२३५॥
भाण्डीरी भण्डी विकसा विकषा कालमेष्यपि ।
कालमेषी चविकायां चविकं चवनं तथा ॥२३६॥
चव्यं चव्याऽप्यथ तण्डुलायां तु तण्डुलः ।
तन्तुलोऽपि विडङ्गं च विलङ्गं गन्धमूलिका ॥२३७॥
शटी पटी च कर्चूरः कर्चूरोऽप्यथ क्षीरिणी ।
हिमावती हिमवती स्थिरायां शालपर्णिका ॥२३८॥
दन्त्य-तालव्याद्याद्याखुपर्ण्यां चित्रोपचित्रया ।
ऐलवालुके वेलेयं वालुकं हरिवालुकम् ॥२३९॥

नवमालिका ससला सातला कैवर्त्तीपरे ।
मुस्तके वानेयं वन्यं प्लवं च परिपेलवम् ॥२४०॥
दशपूरं दशपुरं, कटंभरौषधौ मता ।
भद्रवला राजवला महाबला प्रसारणी ॥२४१॥
सरणी सरणा वापि सारणी कट्ली पुनः ।
ज्योतिष्का ज्योतिष्मती च तर्कारी वैजयन्तिका ॥२४२॥
जया जयन्ती पानीयकण्टके तु शृगाटकम् ।
सङ्घाटिका त्रिकोणश्च त्रिकोने श्रोपमे पुनः ॥२४३॥
बातामममपि बादामं पद्मेऽब्जोऽदन्त-सन्तपण् ।
जलात् पङ्कात् सरसोऽपि परे जन्म-ज-रुट्-रुहाः ॥२४४॥
सरसीरुहं सरसिरुहं विसप्रसूतवत् ।
विसप्रसूनमपि स्यात्कैरविण्यां कुमुद्वती ॥२४५॥
कुमुदिन्यथोत्पले तु कुवेलं कुवलं कुवम् ।
कुवलयं कैरवे तु कुमुदं कुमुदुत्पले ॥२४६॥
नीले त्विन्दीवरं चन्दीवारमिन्दीकरं तथा ।
सौगन्धिके तु कल्हारं हकाराकान्तलान्वितम् ॥२४७॥
पद्मनाले तु मृणालं मृणाली च विशं विसम् ।
विसण्डकं च पद्मादिवृन्ते नाली तु नालया ॥२४८॥
नालं किञ्जल्के तालव्य-दन्त्यमध्यं तु केसरम् ।
नवपत्रे संवर्तिका संवर्तिर्जलनीलिका ॥२४९॥
शेवालं शैवलं शैवालं शेपालं च शौवलम् ।
शेवलं पाटलशाला वाशुराशु च व्रीहिवत् ॥ २५० ॥

आशुव्रीहिः कलमस्तु कडमश्च कलामकः ।
मङ्गल्यके मङ्गल्याऽपि मसूरो मसुरस्तथा ॥ २५१ ॥
मसूरा मसुराऽप्येते वेश्यायामपि वार्द्धयः ।
कलाये सतीनकः स्यात् सातीनश्च मतीनवत् ॥२५२॥
सतीलक-सातीलकौ त्रिकटोऽङ्कुट इत्यपि ।
चणके हरिमन्थः स्याद् हरिमन्थज इत्यपि ॥ २५३ ॥
मुद्गे हरिः सहरितस्तुम्बरस्तु वनोद्भवे ।
राजमुद्गे मकुष्टः स्याद् मयुष्ठोऽपि स-ठान्तिमौ ॥२५४॥
मुकुष्ठक-मयष्ठकौ वर्गाद्यासौ स-ठान्तिमः ।
मुकुष्ठः स्याद्, धान्यभेदे कुल्माषश्च कुल्मासवत् ॥२५५॥
जघन्यव्रीहौ श्यामाकः श्यामकः पीततण्डुला ।
कङ्गु-स्त्वङ्गू कङ्गुनी च कङ्कुश्च, कोरदूषके ॥२५६॥
कोद्रवः कुद्रवोऽप्युक्तः, युगन्धर्यां तु योनलः ।
जोन्नाला यवनालश्च, जूर्णा जूर्णिः शणः सणः ॥२५७॥
भङ्गायाम्, गवेधुकायां गवीधुका गवेधुवत् ।
गवेडुश्च, तिलापिञ्जपेजौ पण्ढतिले ह्युभौ ॥ २५८ ॥
कदम्बके सरिषपः सर्षपः, सस्यशीर्षके ।
कविशं कणिशोऽफलकाण्डे पल-पलालकौ ॥२५९॥
कडङ्गरे बुसबुषौ, मेघनादे स्मृतावुभौ ।
तण्डुलीयस्तण्डुलेरस्तण्डुलीशाकभिद्यहो ॥ २६० ॥
मारिषं मारुपम्, बिम्ब्यां स्यात्तुण्डी तुण्डिकेरिका ।
तुण्डिका तुण्डिकेरी च, मधुस्रवायां तु जीवनी ॥२६१॥

जीवन्ती जीवनीया च जीवा स्यात्, क्षारपत्रके ।
शाकवीरो वीरशाको वास्थूकमपि वास्तुकम् ॥२६२॥
चङ्गेर्यां स्यादम्ललोना लोणिका चाऽम्ललोणिका ।
अम्बोष्ठिकायुताऽम्बष्ठा टोलावदम्लटोलकः ॥२६३॥
खरपुष्पायां कबरी बर्बरा बर्बरी तथा ।
वृन्ताके वार्ता वार्ताकी वार्ताकं च वार्ताकुवत् ॥२६४॥
वार्ताङ्गो वातिङ्गणश्च तथैव दुष्प्रधर्पिणी ।
दुष्प्रधर्पणी च, शतपर्णायां तु कलम्बिका ॥ २६५ ॥
कलम्बूश्च, पालघ्ने तु छत्रा-च्छत्रा-ऽतिछत्रवत् ।
अतिछत्रस्तिक्तके तु पटोलः पटुवत् स्मृतः ॥ २६६ ॥
पुष्करमूले पौष्करं पुष्करं मूलमित्यपि ।
भृङ्गराजे भृङ्गरोऽपि भृङ्गरजो नादन्तगः ॥ २६७ ॥
भृङ्गरजश्च सान्तोऽपि पर्वूजे चाऽपि मूर्धजे ।
दशाङ्गुलमितिख्यातं कारवेल्ले सुशव्यपि ॥ २६८ ॥
सुपवी सुशवी कर्कारौ कूष्माण्डो विदां मतः ।
कुष्माण्डोऽपि च कूष्माण्डी,पटोल्यां तु कोशातकी॥२६९॥
कोपातकी च, कर्कट्यां स्यादीर्वारुरिर्वारुवत् ।
ऊर्वारुरुर्वारुरपि एर्वारुश्चिर्भिटी तथा ॥ २७० ॥
चिर्भिटं चिर्भिटस्तद्वत् वालुङ्कः स्याद् वालुक्यपि ।
त्रपुषी त्रपुसी त्रपुषं त्रिपुषं च, [1]र्शेऽर्शसः ॥ २७१ ॥
शूरणो दन्त्यतालव्यादिमः, बालतृणे पुनः ।
शस्यं स्याद्दन्त्यमूर्धन्यमध्यम, बर्हिषि दभ्रवत् ॥२७२॥

१ अर्शोऽपि, इत्यादृतम् ।

दर्भः कुशः कुसो मुञ्जे शरस्तालव्यदन्त्यभाक् ।
दूर्वायां हरितालीवद्धरिता, धमने नडः ॥ २७३ ॥
नलो नटः, कुरुविन्दे मुस्ता त्रिपु च मुस्तकः ।
इक्षौ गण्डीरी गण्डकी, पुण्ड्रेक्षौ पुण्ड्र-पौण्ड्रकौ ॥२७४॥
कासस्तालव्यदन्त्यान्त ईषीका स्यादिषीकया ।
यवासं यवसंघातेऽर्जुने तु द्वे तृण-त्रिणे ॥ २७५ ॥
मालातृणं भूस्तृणं च, विषे तु गर-सङ्गरौ ।
गरलोऽथ हालाहले हालहलो हलाहलः ॥ २७६ ॥
पर्यन्तवने लोकण्युकर्णी, कीटे कृमिः क्रिमिः ।
लाक्षायामपि तद्भेदे नीलाङ्कुश्च नीलङ्कुवत् ॥ २७७ ॥
गण्डूपदे किञ्चुलकः किञ्चुलुकोऽपि संमतः ।
जलसर्पिण्यां जलूका जलौका च जलौकसः ॥२७८॥
स्त्रियां वा भूम्नि च जलालोका प्रोक्ता जलौकसः ।
पुंस्यदन्तो जलायुकाऽस्रपाऽऽवन्ता विजन्तकः ॥२७९॥
अम्बुमात्रजशङ्खे तु शम्बुः शम्बूश्च शम्बुकः ।
शम्बूकश्च सशाम्बूकः, कपर्दे तु हिरण्यवत् ॥ २८० ॥
हिरणः कथितः प्राज्ञैर्दीर्घकोशा पुनः स्मृता ।
दीर्घकोपा च दुर्नामाऽऽबन्तो नान्तो दुर्नाम्न्यपि ॥२८१॥
पिपीलिके पीलकोऽपि, क्षुद्रजन्तौ तु धान्यजे ।
कणाटीनः कटाटीनः स्याद् यूकाण्डे तु लिक्षया ॥२८२॥
रिक्षोद्दंशो कोलकणो मत्कुणोत्कुणकावपि ।
इन्द्रगोपे लिन्द्रजोऽग्निकोऽथ तन्तुवायके ॥ २८३ ॥

